द्वारा पाचयेत्। स्वयं वा पचेत्। त्रुटितकर्णमिमातृपितृवंश-
जातानां रजस्वलां चतुर्थदिनस्नातामपि न पाचयेत्। पाक-
स्थाने शुद्धवस्त्रादिना वेष्टयित्वा काशान्परितो बन्धयेत्।
तिलान्सर्षपांश्च विकिरेत्सर्वत्र॥

ततो मध्याह्ने श्राद्धब्राह्मणेभ्यो दन्तधावनं तैलमुद्वर्त्तनं
स्नानोपकरणं च नानाविधताम्रपात्रस्थं स्वयमुपगम्य वैश्व-
देविकब्राह्मणपूर्वकं दद्यात्। श्राद्धगृहाग्रतो गोमयोपलि-
प्तायां भूमौ गोमूत्रेण मण्डलं कृत्वा यवैः सपुष्पैरर्चयेत्।
श्राद्धभूमिं च पञ्चगव्येनोपलिप्य ज्वलदङ्गारैः संशोध्य गौर-
मृत्तिकया वेष्टयित्वा श्राद्धभूमिं तिलैः सर्षपैश्च विकिरेत्।
वाराणस्यामयं भूमिसंस्कारो नास्ति गोमयोपलेपनं तु त-
त्रापि। यदि तु परकीयभूमौ श्राद्धं चिकीर्षति तदा
पितृरीत्या प्रमीतभूस्वामिपितृभ्यः श्राद्धीयद्रव्याग्रभागं द-
द्यात्। जीवद्भ्यश्च भूस्वामिभ्यः किञ्चिद्दाननिकरं दद्यात्। वै-
श्वदेविकब्राह्मणोपवेशनार्थं प्रत्येकं प्राङ्मुखदर्भद्वययुक्तानि
प्राङ्मुखान्यासनानि यवोदकप्रोक्षितानि परिकल्पयेत्। पि-
त्रादिब्राह्मणोपवेशनार्थं च दक्षिणाग्रैकैककुशयुक्तानि दक्षि-
णाभिमुखानि तिलोदकप्रोक्षितानि कल्पयेत्। आसने ने-
पालकम्बलं वृषीं वा दद्यात्। तदभावेऽन्यदपि आसनोपरि-
वस्त्रं दद्यात्। प्राङ्मुखत्वं दक्षिणामुखत्वं चासनस्याग्रभा-

द्वारा पाचयेत्। स्वयं वा पचेत् । त्रुटितकर्णीमिमातृपितृवंश
जातानां रजस्वलां चतुर्थदिनस्नातामपि न पाचयेत्। पाक-
स्थानं शुद्धवस्त्रादिना वेष्टयित्वा छागान्परितो बन्धयेत् ।
तिलान्सर्षपांश्च विकिरेत्सर्वत्र ॥

ततो मध्याह्ने श्राद्धब्राह्मणेभ्यो दन्तधावनं तैलमुद्वर्त्तनं
स्नानोपकरणं च नानाविधताम्रपात्रस्थं स्वयमुपगम्य वैश्व-
देविकब्राह्मणपूर्वकं दद्यात् । श्राद्धगृहाग्रतो गोमयोपलि-
प्तायां भूमौ गोमूत्रेण मण्डलं कृत्वा यवैः सपुष्पैरर्चयेत् ।
श्राद्धभूमिं च पञ्चगव्येनोपलिप्य ज्वलदङ्गारैः संशोध्य गौर-
मृत्तिकया वेष्टयित्वा श्राद्धभूमिं तिलैः सर्षपैश्च विकिरेत् ।
वाराणस्यामयं भूमिसंस्कारो नास्ति गोमयोपलेपनं तु त-
थापि । यदि तु परकीयभूमौ श्राद्धं चिकीर्षति तदा
पितृरीत्या प्रमीतभूस्वामिपितृभ्यः श्राद्धीयद्रव्याग्रभागं द-
द्यात् । जीवद्भ्यश्च भूस्वामिभ्यः किञ्चिद्दाननिकरं दद्यात् । वै-
श्वदेविकब्राह्मणोपवेशनार्थं प्रत्येकं प्राङ्मुखदर्भद्वययुक्तानि
प्राङ्मुखान्यासनानि यवोदकप्रोक्षितानि परिकल्पयेत् । पि-
त्रादिब्राह्मणोपवेशनार्थं च दक्षिणाग्रैकैककुशयुक्तानि दक्षि-
णाग्राभिमुखानि तिलोदकप्रोक्षितानि कल्पयेत् । आसने ने-
पालकम्बलं वृषीं वा दद्यात् । तदभावेऽन्यदपि आसनोपरि-
वस्त्रं दद्यात् । प्राङ्मुखत्वं दक्षिणामुखत्वं चासनस्याग्रभा-

गापेक्षया । त्रपी लाङ्गूलापेक्षयेत्यन्ये । एतच्चासनं ब्राह्मणो-पवेशनार्थमेव । न तु विश्वेदेवार्थं पित्राद्यर्थं च । कुशत्रयात्मकमेवोत्सर्जनीयम् ॥

अथ श्राद्धपरिभाषा ॥

सर्वत्र प्रश्ने पङ्क्तिमूर्द्धन्यं ब्राह्मणं पृच्छेत् । सर्वान्वा आरम्भात्समाप्तिं यावत् पवित्रपाणिः स्यात् । श्राद्धार्थं यद्द्रव्यं वेद्यां प्रवेश्यते तदुत्तरदिशा यन्निस्सार्यते तद्दक्षिणदिशा । आवाहनादिब्राह्मणभोजनोत्तराचमनपर्यन्तं श्राद्धकर्त्रा ब्राह्मणैश्च विहितेतरशब्दोच्चारणं न कर्त्तव्यं । दैवं कर्मोदङ्मुखेन भूमिगतदक्षिणजानुनोपवीतिना प्रदक्षिणं कर्त्तव्यम् । उत्सर्गस्तु सजलसयवकुशत्रयेण दक्षिणहस्ताङ्गुल्यग्रात्मकदेवतीर्थयुतेन कर्त्तव्यः । पित्र्यं तु प्राचीनावीतिना वामावर्त्तेन भूमिनिहितवामजानुना दक्षिणामुखेन देवकर्मपूर्वकं कर्त्तव्यम् । ब्राह्मणानां भोजनोत्तराचमने विसर्जनं च पितृपूर्वकं । उत्सर्गस्तु तर्जन्यङ्गुष्ठमध्यात्मकपितृतीर्थवर्त्तिना तिलजलसमेतद्विगुणभुग्नकुशत्रयेण कार्यः । अथामावास्याया-मपराह्णोपक्रमे ब्राह्मणान्स्नातान्यजमानसवर्णानूनान्माङ्गुणी शुचिः शुक्लदिवासाः कृताञ्जलिर्द्वारेषु तिष्ठन् स्वागतमिति ब्रूयात् । सुस्वागतमिति तैरुक्ते गोमयोपलिप्तायां भूमौ त्वासनेषूपवेश्य दक्षिणहस्तेन ब्राह्मणदक्षिणजानु सं

दैवब्राह्मणान् प्राङ्मुखान् पितृब्राह्मणानुदङ्मुखानामन्त्रयेत्। ॐ अद्य पित्रादित्रयसम्बन्धिविश्वेदेवश्राद्धार्थं युवामहमामन्त्रये ॐ अद्य मातामहादित्रयसम्बन्धिविश्वेदेवश्राद्धार्थं युवामहमामन्त्रये। अथ वा पित्रादित्रयसम्बन्धिमातामहादित्रयसम्बन्धिविश्वेदेवश्राद्धार्थं युवामहमामन्त्रये ॥ इति वाक्यम्। ॐ अद्य पितृश्राद्धार्थं त्वामहमामन्त्रये। एवं पितामहादिपञ्चानामपि श्राद्धार्थं च निमन्त्रयेत्। एवमस्मिन्पक्षे दशाष्टौ वा ब्राह्मणा भवन्ति। एतदशक्तौ दैवे एकैकमुभयत्र, एकं वा दैवे। पित्रादित्रिके एकम्। मातामहादित्रिके चैकं निमन्त्रयेत्। अत्र पक्षे चत्वारस्त्रयो वा ब्राह्मणा भवन्ति। सर्वत्र निमन्त्रितोऽस्मीति प्रतिवचनं ब्राह्मणस्य। ततः अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः। भवितव्यं भवद्भिर्नोऽद्यतने श्राद्धकर्मणि ॥ १ ॥ इत्यभ्यर्थयेत्। ॐ भवितव्यमिति प्रतिवचनं। ततः इदं मे पाद्यमिति पाद्यमुपनीय वारं वारमभिमन्त्र्य विनीतः स्वयमेव तेषां पादौ प्रक्षालयेत्। ततः ॐ विश्वेदेवा इदमर्घ्यं वो नमः। इत्युभयत्र ब्राह्मणपादयोर्यवपुष्पगन्धोदकैरर्घ्यं दद्यात्। ततः ॐ अद्यामुकगोत्र पितरमुकशर्मन् इदमर्घ्यं तस्मै स्वधेति पितृब्राह्मणपादयोर्गन्धपुष्पतिलजलैरर्घ्यं दद्यात्। एवमेव पितामहादिपञ्चभ्यः। तत इदमाचमनीयमिति ब्राह्मणेभ्य आचमनार्थं जलमुपनीय स्वयमप्याचामेत्।

पूर्वदिननिमन्त्रणपक्षे वाक्ये अद्य स्थाने श्व इति वक्तव्यम्।
अयर्थश्लोके चाद्य स्थाने श्वो भूत इति। ब्राह्मणैस्तु पार्व-
सि। चेदद्यविघ्नेन रजनी यास्यति तदा सर्वं सम्पादयिष्या-
इति प्रत्येकं वाच्यम्। स्वागतप्रश्नानन्तरमेव पाद्या-
मिति विशेषः। प्रातर्निमन्त्रणपक्षेऽपि स्वागतानन्तरं पाद्य-
दानं वाच्यम्। अथ श्राद्धस्थानं गत्वाऽन्नाभिप्रायेण वि-
त्युक्त्वा ब्राह्मणान् गृहीत्वा पूर्वकल्पितान्यासनानि
अत्रासध्वमित्युपवेशयेत्। देवान्प्राङ्मुखान्दक्षिणपूर्वेण। पि-
त्रानुदङ्मुखानुत्कृष्टपूर्वं निवेशयेत्॥ ततस्तेषां पादयोरध-
स्तादक्षिणार्थं कुशत्रयं दद्यात्। प्रत्यासनसमीपे
श्राद्धापवर्गस्थायिनो दीपान् दद्यात्। तेषां
द्विजैरेव कार्यम्। रक्षोघ्नानि
सन्निधापयेत्। काककुक्कुटादीनि श्राद्धापहन्तॄनपसारयेत्।
श्राद्धदेशावरणं कुर्यात्। श्राद्धदेयद्रव्याणि सिञ्चेत्। आप

दायै स्वधायै नित्यमेव नमो नमः ॥ इति त्रिर्जपेत् । इमं च मन्त्रं श्राद्धाद्यन्तयोः पिण्डदाने च त्रिर्जपेत् । ततो विश्वेदेवा इदमासनं वो नमः । इति दैवब्राह्मणासनोपरि स्थितं प्रागग्र मृजु कुशत्रयात्मकमासनं पित्रादिदेवेभ्यो दत्वा अपरं च मातामहादिदेवेभ्यो दत्वा द्विगुणभुग्नकुशत्रयात्मकानि पित्रादिब्राह्मणासनोपरि स्थितानि षडासनानि । ओंअद्यामुक गोत्र पितरमुकशर्मन्निदमासनं तुभ्यं स्वधा । इति वाक्यषट्केन पित्रादिभ्यः प्रत्येकमुत्सृजेत् । ततः ओंविश्वान्देवानहमावाहयिष्ये । इति दैवब्राह्मणान्पृष्ट्वा । ओंआवाहयेत्यनुज्ञातः । दैवब्राह्मणमङ्गुष्ठेन गृहीत्वा । ओंविश्वेदेवासऽआगत शृणुता मऽइमᳬहवम् ॥ एदं बर्हिर्निषीदत ॥ इत्यनेनावाह्य । ओं यवोऽसि यवयास्मद्द्वेषो यवयारातीः । इत्यनेन यवान्विकीर्य । ओं विश्वेदेवाः शृणुतेमᳬहवम्मे येऽअन्तरिक्षे यऽउप द्यविष्ठ ॥ येऽअग्निजिह्वाऽउत वा यजत्राऽआसद्यास्मिन्बर्हिषि मादयद्ध्वम् ॥ इति जपेत् । विश्वेदेवोपस्थिता-स्तीरविज्ञाने । ओंआगच्छन्तु महाभागा विश्वेदेवा महाबलाः ये यत्र योजिताः श्राद्धे सावधाना भवन्तु ते ॥ इति श्लोकोऽप्युच्चारणीयः । ततः पितॄनावाहयिष्ये । इति पृष्ट्वा । ओंआवाहयेत्यनुज्ञातः । ओंउशन्तस्त्वा निधीमह्युशन्तः समिधीमहि, उशन्नुशतऽआवह पितॄन्हविषेऽअत्तवे ॥ इत्यावाह्य ।

ओँ अपहता ऽसुरा रक्षांसि वेदिषदः । इति पात्रसमीपे विकीर्य्य । ओँ आयन्तु नः पितरः सोम्यासो ऽग्निष्वात्ताः पथिभिर्देवयानैः ॥ ... । अधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥ इति जपित्वा ॥ पवित्रमेकैकमुपरि धृत्वा । ओँ शन्नो देवीरभिष्टय आपो भवन्तु पीतये ॥ शंय्योरभिस्रवन्तु नः ॥ इति जलं प्रक्षिप्य । यवोऽसि यवयास्मद्द्वेषो यवयारातीः । इति देवपात्रेषु यवान्विकीर्य ॥ ओँ तिलोऽसि सोमदेवत्यो गोसवो देवनिर्मितः । प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान्प्रीणाहि नः स्वाहा । इति पित्रादिपात्रषट्के तिलान्प्रक्षिप्य । अष्टसु पात्रेषु तूष्णीमेव गन्धपुष्पे निक्षिपेत् । ततो वामहस्तेन पात्रमादाय तत्रस्थं पवित्रं गृहीत्वा विप्रकरे दत्वा । कुशजलं दत्वा । ओँ या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पार्थिवीर्याः । हिरण्यवर्णा ... पः शिवाः शंस्योनाः सुहवा भवन्तु । इति मन्त्रं पठित्वा ओँ विश्वेदेवा एष वोऽर्घो नमः । इति दक्षिणहस्ते देवतीर्थेन विप्रदक्षिणकरे पवित्रोपरि अर्घं दत्वा ॥ एवमेव मातामहादिदेवेभ्यो अर्घं दद्यात् । ततो वामहस्तेन पितृपात्रं गृहीत्वा विप्रकरे पवित्रं दत्वा । ओँ या दिव्या आप इति पठित्वा । ओँ अद्यामुकगोत्र पितरमुकशर्मन् एष तेऽर्घः ॥

या । इति दक्षिणहस्तपितृतीर्थेन यथाजलं पतति तथा ब्राह्मणदक्षिणहस्तपवित्रोपरि अर्घं दद्यात् । वामान्वारब्ध-दक्षिणहस्तधृतार्घपात्रेणार्घो देयः । इत्यपि पक्षः । एवमेव मातामहादिपक्षेभ्यः । ततः पितामहप्रपितामहार्घस्थानि जलतिलगन्धपुष्पाणि पितृपात्रे निधाय । ओंपितृभ्यः स्थानमसीति पितृब्राह्मणवामप्रदेशे भूमावधोमुखं स्थापयेत् । तदुपरि पितामहपात्रं तदुपरि प्रपितामहपात्रम् । ततो मातामहपात्रे इतरपात्रद्वयस्थजलादीन्प्रक्षिप्य मातामहब्राह्मणवामप्रदेशे तथैव स्थापयित्वा तदुपरि मातामहपात्रं तदुपरि प्रमातामहपात्रं तदुपरि वृद्धप्रमातामहपात्रं स्थापयेत्। एतानि च षट्कपात्राणि दक्षिणादानपर्यन्तं नोद्धरेन्न चालयेत्। ततः ओं विश्वेदेवा एतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवीताच्छादनानि वो नमः। इत्युभयत्र गन्धादि दत्वा । ओंअद्यामुकगोत्र पितरमुकशर्मन्नेतानि गन्धादीनि तुभ्य स्वधा । इति पित्रे। एवमेव पितामहादिभ्यो दद्यात् । ततः कार्य्यैरेगन्धः । इदं वो गन्ध्यम् । इत्यादि क्रमेण प्रत्येकं ब्राह्मणेभ्यः प्रतिपादयेत् । तैश्च पुष्पं शिखावर्जं न धार्यम् । अत्रावसरे अन्यदपि ताम्बूलयज्ञोपवीतादीनि फलार्थितया दद्यात् ।
... लौकिकाग्नौ प्रणीताग्निभक्ताना वा ब्रा-
...नि कुर्यात् । अथ व्यञ्जनक्षारवर्जितं

घृताक्तमुष्णं ब्राह्मणाग्रभागमुद्धृत्याग्नौ करणं करिष्ये। इति पृष्ट्वा। ओं कुरुष्व। इत्यनुज्ञातः साग्निर्भयक्रोधत्वरारहितः सधूमत्वादिदोषरहिते दक्षिणाग्नौ तदभावे आवसथ्याग्नौ कांस्यपात्रस्थमवदाय मेक्षणेनाहुतिद्वयमुपवीती प्राङ्मुखो वक्ष्यमाणमन्त्रद्वयेन जुहुयात् ॥ ओं अग्नये कव्यवाहनाय स्वाहा ॥ ओं सोमाय पितृमते स्वाहा ॥ ततो मेक्षणमग्नौ क्षिपेत्। निरग्निरेताभ्यामेव मन्त्राभ्यां पितृब्राह्मणहस्ते जले वा आहुतिद्वयं जुहुयात् ॥ ततोऽग्नौकरणार्थो घृतहुतशेषमन्नं देवपात्रे पितृपात्रेषु दद्यात्। अग्नौकरणशेषदानं पितृपात्रब्राह्मणेष्वेवेति पक्षान्तरम्। तत उष्णमन्नं सुशीतलजलसहितं सघृतं समांसं सव्यञ्जनं यथावत्। परिविष्य मधुनाऽभिघार्य मधुवातेत्यादिनाऽभिमन्त्रयेत्। ततः पित्रादिदेवपात्रमालभ्य ॥ ओं पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतेऽमृतं जुहोमि स्वाहा। इति जप्त्वा। ओं इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्॥ समूढमस्य पांसुरे। इति वैष्णव्यर्चा ॥ ओं विष्णो हव्यं कव्यं रक्षस्व। इति यजुषा ब्राह्मणाङ्गुष्ठमनखं स्वहस्तेन धृतमिदमन्नं। इत्यन्ने। इमा आपः। इति जले। इदमाज्यं। इति घृते। इदं हविरिति पुनरन्ने निवेश्य। यवोऽसि यवान्विकीर्य। ओं विश्वेदेवा एतद्वोऽन्नं सोपकरणं नमः। इत्युत्सृजेत्। एवमेव [illegible] नामग[illegible]

दैवेभ्य उत्सृजेत् । ततः पितृपात्रमुपलभ्य पूर्ववज्ज्ञात्वा ब्रा-
ह्मणाङ्गुष्ठमन्नमध्ये निवेश्य । ओं अपहता इत्यादिना-
ऽन्ने तिलान्विकीर्य । ओं अद्यामुकगोत्र पितरमुकशर्मन्ने
तदन्नं सोपकरणं तुभ्यं स्वधा । इत्युत्सृजेत् । एवमेव पिता-
महादिभ्योऽप्युत्सृजेत् । ततः ओं अन्नहीनं क्रियाहीनं वि-
धिहीनं च यद्भवेत् ॥ तत्सर्वमच्छिद्रमस्त्विति जुषध्वमिच्छातः ।
इति चोक्ता । भवन्तः प्राशयन्तु । इति ब्राह्मणेभ्योऽपोशानं
दद्यात् । ते च वाग्यमादिनियमवन्तः । ओंकारपूर्वं भुञ्जीरन् ।
श्राद्धकर्ता तु तेष्वश्नत्सु व्याहृतित्रयपूर्वां सप्रणवां गायत्रीं
त्रिःसकृद्वा जपेत् । तथा पवित्रपाणिर्दर्भेष्वासीनः । ओं म-
धुव्वाताऽऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्न्नः सन्त्वो-
षधीः ॥ मधुनक्तमुतोषसो मधुमत्पार्थिवं रजः ॥ मधुद्यौरस्तु
नः पिता ॥ मधुमान्नो वनस्पतिर्मधुमाँ २ ॥ ऽ अस्तु सूर्यः ।
माध्वीर्गावो भवन्तु नः । इति त्र्यृचम् । मधु मधु मध्विति ।
रक्षोघ्नीः शृणुध्व पाजइत्याद्याः पञ्चऋचः पठित्वा भूमिं तिलै-
रास्तीर्य ॥ पित्रादिकरूपतया ब्राह्मणान् ध्यायेत् ॥ ओं उदीर-
[illegible] ऽ उन्मध्यमाः पितरः सोम्यासः ॥ असुंय-
स्तेनोऽवन्तु पितरो हवेषु । इत्यादिपि-
[illegible] भिश्रान इति द्वादशर्चं पुरुष-
[illegible]णि जपेत् । वेदेतिहासपु-

णादिययाशक्ति यथारुचि ब्राह्मणान् श्रावयेत् । ब्राह्म-
दिस्तोत्रादि च वेणुवीणाप्रभृतिभिर्ब्राह्मणान्हर्षयन्माधुर्यादीन्
व्यञ्जनगुणानुत्कीर्त्तयन् । यस्य यच्चोपलभ्यते तस्य तदु-
पनयन् मन्दं मन्दं भोजयेत् । अथ तृप्तान् ज्ञात्वा उच्छिष्ट-
सन्निधौ आस्तृतदक्षिणाग्रकुशत्रयां भूमिं प्रोक्ष्य सर्वप्रकार-
मन्नमुद्धृत्य सतिलमेकीकृत्य । ओं अग्निदग्धाश्च ये जीवा ये-
ऽप्यदग्धाः कुले मम । भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परा-
ङ्गतिम् । इति मन्त्रेण मन्त्रस्यफलमुद्दिश्य विकिरेत् । तत आ-
चम्य हरिं स्मृत्वा । ब्राह्मणेभ्यः प्रत्येकं जलगण्डूषं दत्त्वा पूर्व-
वद्गायत्रीं मधुवाता इति ऋचं मधु मधु मध्विति जप्त्वा । ओं
तृप्ताःस्थ इति पृष्ट्वा । ओं तृप्ताःस्म इति तैरुक्तेऽशेषमन्नं किं
क्रियतामिति पृष्ट्वा । इष्टैः सह भुज्यतामित्युक्ते । पिण्डानहं
करिष्ये । इत्युक्ते । ओं कुरुष्वेत्यनुज्ञातः पित्रादिब्राह्मणो-
च्छिष्टसन्निधौ चतुरस्रं मण्डलाकारं वा दक्षिणाप्रवणं रत-
पीयं हस्तमात्रं चतुरङ्गुलोच्छ्रितं पित्रादित्रयपिण्डपातनार्थं
स्थानं निर्माय । मातामहादिब्राह्मणोच्छिष्टसन्निधौ माता-
महादिपिण्डपातनार्थं तादृशमेव स्थानं उभयत्र मध्यदेशे
वामहस्ते गृहीतदर्भपिञ्जुलीमूलेन । ओं अपहता इत्यादिना
मन्त्रेण सव्योपगृहीतदक्षिणहस्तेन दक्षिणाग्रां रेखां सकृदुल्लि-
खेत् । ततो दर्भपिञ्जुलीमुत्तरस्यां दिशि निक्षिप्य । ओं ये

रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति ॥
परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ।
इति मन्त्रेण ज्वलदुल्मुकं प्रथमरेखोपरि भ्रामयित्वा दक्षिणतो निदध्यात् । तत उपमूलसकृदाच्छिन्नदक्षिणाग्रकुशत्रयं प्रथमरेखोपरि एकदैव स्तीर्त्वा एवमेवापरकुशत्रयमपररेखायामास्तृणुयात् । तत ओं देवताभ्य इति त्रिर्जप्त्वा । ततः सतिलजलपवित्रमुदकपात्रं गृहीत्वा पितृतीर्थेन उद्धृतपात्रेण पितृतीर्थावरोधे देवतीर्थेन वा । ओं मद्यामुकगोत्र पितरमुकशर्मन्नवने निक्ष्व ते स्वधा । इति कुशमूले पित्रे अवनेजनं दत्वा । अनेन प्रकारेण पितामहाय कुशत्रयमध्ये, प्रपितामहाय कुशाग्रे अवनेजनं दद्यात् । एवमेव मातामहादित्रिके । ततः सर्वस्मात् श्राद्धीयान्नात् किञ्चिदन्नमुद्धृत्य गव्याज्यतिलजलसर्वव्यञ्जनसहितं सर्वमेकत्र चमसादिपात्रे पित्रादिभ्यो बिल्वप्रमाणांस्त्रीन्पिण्डान्निर्माय साङ्गुष्ठमुष्टिबद्धांस्त्रीन्पिण्डान्मातामहादिभ्यः कुर्यात् । ततस्तान्पिण्डान्मधुघृताभिघारितान्सतिलान्सव्योपगृहीतदक्षिणहस्तेन पित्रादिभ्यः प्रत्येकं स्वीयस्वीयावनेजनस्थाने दद्यात् । ओं मद्यामुकगोत्र पितरमुकशर्मन् एष ते पिण्डः स्वधा । इति पित्रे एवमेव पितामहादिभ्यः । ततः प्रपितामहादिभ्य ऊर्ध्वं त्रयाणां लेपभुजां तृप्तिमुद्दिश्य पित्रादिकपिण्डाधारकुशमूले करं प्रोञ्छ्य

द्विराचम्य हरिं स्मरेत्। ततः अत्र पितरो मादयध्वं यथाभा-
गमावृषायध्वम्। इति पित्रुद्देश्येन पठित्वा वामावर्त्तेनोदङ्मु-
खीभूय प्रीतमनाः मनाक् श्वासं नियम्य तेनैव यथा परावृत्य।
अमीमदन्त पितरो यथाभागमावृषायिषत। इति ज्ञात्वा।
पूर्वावनेजनजलावशिष्टजलेन पिण्डोपरि प्रत्यवनेजनं दत्वा
नीवीं विस्रंस्य। आचम्य। ततः ओँ नमो वः पितरो रसाय
नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः
पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो म-
न्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त
सतो वः पितरो देष्म। इति कृताञ्जलिः पठेत्। अत्र मन्यवे
इत्यन्तेन वसन्तादिषडृतुरूपतया पितृनमस्कारः। नमो वः
पितरः पितरो नमो वः इति केवलानां पितॄणां नमस्कारः।
गृहान्नः इत्यादिना पितृभ्यः आशीःप्रार्थनविभागः कर्त्तव्यः।
तत एतद्वः पितरो वास इति मंत्रं पठित्वा। ओमद्यामुकगोत्र
पितरमुकशर्म्मन्नेतत्ते वासः स्वधा। इति सूत्ररूपां श्वेतवस्त्र-
दशां पञ्चाशदूर्ध्ववयस्कयजमानश्चेल्लोम वा पितृपिण्डो-
परि दद्यात्। एवमेव पितामहादिपिण्डेषु दद्यात्। तत-
स्तूष्णीमेव पित्रादीनुद्दिश्य मदीयपिण्डेषु गन्धपुष्पधूपदीपा-
दीनि दद्यात्। ततः पितृब्राह्मणानाचमय्य। दैवब्राह्मणाना-
चामयेत्। ततः सर्वेषामेव ब्राह्मणानां दक्षिणकरे। ओँ अ-

पाम्नध्ये स्थिता देवाः सर्वमत्र प्रतिष्ठितम् । ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवन्तु मे । इति जलं दद्यात् । ओं लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे । लक्ष्मीर्वसते सदा गोष्ठे सौमनस्यं सदाऽस्तु मे ॥ इति पुष्पाणि । ओं अक्षतं चास्तु मे पुण्यं शान्तिः पुष्टिर्धृतिश्च मे । यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम । इत्यक्षतम् । ओं यवोऽसीति यवान् । एकोद्दिष्टवक्ष्यमाणविधिना वा जलादिदानम् । तत ओं अद्यामुकगोत्रस्य पितरमुकशर्मणो दत्तैतदन्नपानादिकमक्षय्यमस्तु । इति सतिलमक्षय्योदकं पितृविप्रकरे दद्यात् । एवमेव पितामहादीनां नामगोत्राभ्यां तदीयविप्रकरेषु अक्षय्योदकं दद्यात् । ततः प्राङ्मुख उपवीती तन्मनाः सुमनाः कृताञ्जलिर्दक्षिणां दिशं पश्यन् पितृविप्रेभ्य आशिषो गृह्णीयात् ॥ ओं अघोराः पितरः सन्त्विति वदेत् । सन्त्विति तैरुक्ते । गोत्रं नो वर्द्धतां वर्द्धतामिति तैरुक्ते । दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च । श्रद्धा च नो मा व्यगमद्बहुदेयं च नोऽस्तु । अन्नं च नो बहु भवेदतिथींश्च लभेमहि । याचितारश्च नः सन्तु मा च याचिष्म कञ्चन । इति च । एताः सत्या आशिषः सन्तु वदेत् । सन्त्विति तैरुक्ते । ततः पिण्डोपरि सपवित्रान्कुशानास्तीर्य स्वधां वाचयिष्ये । इत्युक्ते । वाच्यतामित्युक्तः । पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमाता-

महेभ्यो वृद्धप्रपितामहेभ्यश्च स्वधोच्यतामिति वदेत् । अस्तु स्वधेति तैरुक्ते सपवित्रदर्भान् छिन्नपिण्डोपरि । ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् । स्वधास्थ तर्पयत मे पितॄन् इत्यपो निषिञ्चेत् । ततः स्वस्थानस्थितान् पिण्डान्नमीभूय प्रचाल्यापयेत् । ततः पिण्डाधारदर्भानुल्मुकं च अग्नौ निक्षिप्य । अर्घ्यपात्राण्युत्तानीकृत्य यथाशक्ति दक्षिणां दद्यात् । ओं अद्य । कृतैतत्पार्वणश्राद्धाङ्गभूतपित्रादित्रिदैवसम्बन्धिविश्वेदेवश्राद्धप्रतिष्ठार्थं दक्षिणाद्रव्यमिदं हिरण्यमग्निदैवतं अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे । तत ओं स्वस्तीति वाचयेत् । एवं मातामहादित्रिदैवश्राद्धप्रतिष्ठार्थमपि दद्यात् । असम्भवे फलमूलादिकं दद्यात् । तत ओं अद्य कृतैतत्पितृश्राद्धप्रतिष्ठार्थं दक्षिणामिदं रजतं चन्द्रदैवतं अमुकगोत्रायेत्यादिना दद्यात् । एवं पितामहादिश्राद्धप्रतिष्ठार्थमपि दद्यात् । सर्वत्र स्वस्तीति वाचयेत् । दैवे रजतनिषेधः । ततो देवताभ्य इति त्रिर्जपेत् । ओं विश्वेदेवाः प्रीयन्ताम् । इति देवब्राह्मणान् वाचयित्वा । पित्रादिब्राह्मणानुत्थाप्य । पंक्तिमूर्धन्यमङ्गुष्ठेन गृहीत्वा गृहीतोदकपात्रो विसर्जयेत् । ओं वाजे वाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः । अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः । ततस्तथैव देवब्राह्मणान् विसर्जयेत् । ततस्तानुगम्यानन्तरं

ग्निनाप्रदक्षिणी कुर्वन् । ओं आमा वाजस्य प्रसवो जग-
म्यादेमे द्यावापृथिवी विश्वरूपे ॥ आमागन्ता पितरा मा-
तरा चामा सोमोऽमृतत्वेन गम्यात् । इति मन्त्रेण । सी-
मान्तमष्टौ वा पदानि बन्धुभार्यामधितान्यनुव्रज्य उदक-
धारया प्रदक्षिणीकृत्य गृहं प्रविशेत् । ततो रक्षादीपनिर्वा-
पणम् । ब्राह्मणभोजनानन्तरमुच्छिष्टापनयनं दिनान्तरधा-
रणं तु काम्यम् । पिण्डान् गोऽजं विप्रादिर्यायमान्वा खा-
दयेत् । अग्नौ जले वा क्षिपेत् । विप्रान्ते के वा विकिरेत् ।
जलस्थो दक्षिणामुखोऽम्भसि वा क्षिपेत् । पितामहपिण्डं तु
अपान्त्वौषधीनां रसं प्राशयामि । भूतकृतं गर्भं धत्स्व । इति
मन्त्रेण ऋतुस्नातायै पितृभक्तायै साध्व्यै धर्मपत्न्यै दद्यात् ।
सा शुचिर्वाग्यता पुत्रकामा । ओं आधत्त पितरो गर्भं कु-
मारं पुष्करस्रजम् । यथेह पुरुषोऽसत् । इति मन्त्रेण पठित्वा-
ऽश्नीयात् । यदि मध्यमपिण्डं पत्न्यै न ददाति तदा जीर्ण-
वृषभं छागं वा भोजयेत् । श्राद्धभुक् दानप्रतिग्रहहोमस्वा-
ध्यायभारान्वर्जयेत् । कर्त्ता भोक्तारौ द्यूताध्वगमनमैथुनाया-
सस्वाध्यायकलहं च पुनर्भोजनहिंसादीनि न कुर्यात् । हा-
रीतः । न तत्र वीरा जायन्ते नीरोगा न शतायुषः । न च
श्रेयोऽधिगच्छन्ति यत्र श्राद्धविवर्जितम् ॥ १ ॥ अपि मूलफलै-
र्वाऽपि तथा ह्युदकतर्पणैः । अविद्यमाने कुर्वीत नैव श्राद्धं वि-

वर्जितम् ॥ २ ॥ याज्ञवल्क्यः । आयुः प्रजां धनं बुद्धिं स्वर्गं मोक्षं सुखानि च । प्रयच्छन्ति तथा राज्यं नृणां पितृपितामहाः ॥ ३ ॥ मत्स्यपुराणे । रतिः शक्तिर्वराः कान्ता भोज्यं भोजनशक्तिता । दानशक्तिः सविभवा रूपमारोग्यमेव च ॥ ४ ॥ श्राद्धपुष्पमिदं श्रेष्ठं फलं ब्रह्मसमागमः ॥ इति पितृभक्तौ पार्वणश्राद्धेतिकर्त्तव्यताध्यायः समाप्तः ॥

---

अथैकोद्दिष्टश्राद्धम् ॥

मध्याह्ने ब्राह्मणं स्नातं यजमानसवर्णकेनाहूतं शुचि शुक्लद्विवाससं कृताञ्जलिर्दर्भेष्वासीनः स्वागतमिति पृच्छेत् । सुस्वागतमिति तेनोक्ते शुचिदेशे पीठाद्यासने उपवेश्य उदङ्मुखं दक्षिणामुखः प्राचीनावीती पातितवामजानुर्विप्रजानुं दक्षिणकरेण स्पृष्ट्वा । ॐ अद्य पितुः सांवत्सरिकैकोद्दिष्टश्राद्धमाचरिष्ये । त्वमत्र निमन्त्रित इति निमन्त्रयेत् । निमन्त्रितोऽस्मीति प्रतिवचनम् । ततः अक्रोधनेन शौचपरेण सततं ब्रह्मचारिणा । भवितव्यं भवता मेऽद्यतने श्राद्धकर्मणि । इति नियमान् श्रावयेत् । सर्वायासविनिर्मुक्तेनेत्यादिना प्रार्थयेत् । भवितव्यमिति प्रतिवचनम् । पूर्वदिननिमन्त्रणपक्षे । यद्यविघ्नेन रजनी यास्यति । इति वचनम् । अद्यतनेपदस्थाने श्वोभूतपदमिति विशेषः । अथ इदं ते पाद्यम् । इति पाद्यमुपनीय

वारंवारमभिनन्द्य। विनीतः स्वयमेव विप्रपादौ प्रक्षालयेत्। ओमद्यामुकगोत्र पितरमुकशर्मन्नेष ते पादार्घः स्वधा नमः। इति जलतिलगन्धपुष्पैर्विप्रपादयोरर्घं दद्यात। ततः इदं ते आचमनीयमिति विप्रायाचमनार्थं जलमुपनीय स्वयं चाचम्य दक्षिणाग्रं कुशसमावृतं गोमयानुलिप्तं श्राद्धदेशमागत्यान्नाभिप्रायेण सिद्धमित्यभिधाय पूर्वकल्पितं यथाविहितमासनं स्पृशन्। अत्रास्य। इति विप्रमासने उपवेशयेत्। ततस्तत्पदयोर्दक्षिणाग्रकुशत्रयमधस्ताद्दद्यात्। आसनसमीपे तिलतैलेन दीपं दद्यात्। आश्राद्धसमाप्तिं यावद्दीपेन रक्षणीयः। तिलगौरसर्षपादीन् रक्षोघ्नान् श्राद्धदेशे सन्निधापयेत्। श्राद्धदेयद्रव्याणि पुण्डरीकाक्षस्मरणेनेति सिञ्चेत्। काककुक्कुटादीन् श्राद्धहन्तॄनपसारयेत्। अथ कुशतिलजलानि दक्षिणकरेणादाय प्राङ्मुख उपविष्टः। ओं अद्यामुकगोत्रस्य पितुरमुकशर्मणः सांवत्सरिकैकोद्दिष्टश्राद्धमहं करिष्ये। इति संकल्प कुर्यात्। कुरुष्व। इति ब्राह्मणानुज्ञातो गायत्रीं जप्त्वा देवताभ्य इति त्रिर्जपेत्। ततः ओमद्यामुकगोत्र पितरमुकशर्मन्निदमासनं तुभ्यं स्वधा। इति द्विगुणभुग्नदक्षिणाग्रकुशत्रयात्मकमासनं विप्रासनोपरि समनुदद्यात्। ततः ओं अपहतेत्यादिना तिलान्विकीर्य। ओं आयन्तु न इत्यादिमन्त्रं जप्त्वाऽर्घपात्रोपरि पवित्रं धृत्वा। ओं शन्नोदेवीति जपन्। ओं

तिष्ठोऽस्मीति तिष्ठान् तूष्णीमेव गन्धपुष्पे प्रक्षिप्य वामकरे
णार्घपात्रमादाय विप्रकरे पवित्रं दद्यात् । ॐ या दिव्या
आपइति पठित्वा । ॐ अद्यामुकगोत्र पितरमुकशर्मन् एष ते
हस्तार्घः स्वधा । इति दक्षिणकरेण पितृतीर्थेन यथाजलं प-
तति तथा विप्रकरे सपवित्रेऽर्घं दद्यात् । ततः ॐ पित्रे स्था
नमसीति मन्त्रेणार्घपात्रं अधोमुखं पितृवामपार्श्वे निदध्यात्
एवं स्थितमर्घपात्रं दक्षिणादानपर्यन्तं न चालयेत् । तत ॐ
अद्यामुकगोत्र पितरमुकशर्मन्नेतानि गन्धपुष्पधूपदीपतां-
म्बूलाच्छादनादीनि तुभ्यं स्वधा । इति गन्धादिकं दद्यात्
अयं ते गन्ध इत्यादिना ब्राह्मणाय प्रत्येकं प्रतिपादयेत् । ध
माल्यं शिखातिरिक्तदेशे न विभूयात् । अस्मिन्नवसरे ताम्बूल-
यज्ञोपवीतदानम् । ब्राह्मणं वेष्टयित्वा गौरस्मतिकादिना म-
ण्डलं कुर्यात् । परकीयभूमिश्राद्धकरणपक्षे । ॐ इदमन्नं भू-
स्वामिपितृभ्यो नमः । इति घृतादियुक्तमन्नं दद्यात् । अथो-
ष्णमिष्टान्नपूर्णपात्रं कराभ्यामादाय पितरं ध्यायन् विप्राग्रतो
मन्दं निदध्यात् । तत्पार्श्वे भूमावेव घृतादिमांसपात्राणि ।
ततोऽन्नं मधुमयं कृत्वा मधुव्वाता इति त्र्यृचेनाभिमन्त्र्य । ततो
ऽन्नपात्रमालभ्य । ॐ पृथिवी ते पात्रमिति जप्त्वा । ॐ इदं
वि ष्णुर्विचक्रमे । इत्यादिना ब्राह्मणाङ्गुष्ठमन्नं आत्मवस्त-
अमपदोन ... । इत्यादि । इमा आपः । इत्यपु । इदं हविः ।

इति हविषि निवेशयेत् । ओमपहता इत्यादिनाऽन्नोपरि तिला-
न्विकीर्य । ओं अद्यामुकगोत्र पितरमुकशर्म्मन्नेतदन्नं सोपकरणं
तुभ्यं स्वधा । इति अन्नमुत्सृजेत् । ओं अन्नहीनमित्यादि
पठित्वा जुषस्व । इत्युक्त्वा । भवान्प्राशयतु । इत्यपोशानं वि-
प्राय दद्यात् । स यथाविधि भुञ्जीत । श्राद्धकर्त्ता तु व्याहृ-
तिभिः सप्रणवां गायत्रीं त्रिः सकृद्वा जपेत् । कृताञ्जलिर्द-
र्भेष्वासीनः । ओं मधुवाता इत्यृचं मधु मधु मध्विति च जपेत्
रक्षोघ्नी ऋचः पठित्वा भूमिं तिलैरास्तीर्य्य । विप्रं पितृरूपतया
चिन्तयेत् । पितृमन्त्रान्पुरुषसूक्तमप्रतिरथमन्यानि च यथा-
शक्ति यथारुचि जपेत् । वेदादीन् विप्रं श्रावयेत् । अथ तृप्तं
ज्ञात्वा उच्छिष्टसन्निधौ आस्तृतदक्षिणाग्रकुशायां भूमिं प्रो-
क्ष्य । ओं अग्निदग्धा इत्यन्नं भूमौ प्रकीर्याचम्य हरिं स्मृत्वा
ब्राह्मणाय जलगण्डूषं दत्त्वा पूर्ववद्गायत्रीं जप्त्वा । मधुवाता
इतित्र्यृचं मधु मधु मध्विति च जप्त्वा । स्वदितम् । इति पृष्ट्वा
ओं सुस्वदितम् । इति तेनोक्ते । शेषमन्नं किं क्रियतामिति
पृष्टे । इष्टैः सह भोक्तव्यम् । इति तेनोक्ते । पिण्डमहं करिष्ये ।
इति पृष्टे । कुरुष्व । इत्यनुज्ञातः उच्छिष्टसन्निधौ पिण्डार्थं
स्थानं निर्माय । तन्मध्ये वामहस्तगृहीतदर्भपिञ्जुलीमूलेन ।
ओं अपहता इति वामान्वारब्धदक्षिणकरेण प्रादेशमितां
रेखां दक्षिणाग्रां समुल्लिख्य दर्भपिञ्जुलीमुत्तरस्यां दिशि निः

क्षिपेत्। ततो ये रूपाणीति मन्त्रेणोल्मुकं रेखायां भ्रामयित्वा दक्षिणतो निदध्यात्। ततो उपमूलच्छिन्नकुशत्रयं रेखा-स्तृणुयात्। देवताभ्य इति त्रिर्जप्त्वा। ततः तिलगन्ध गृहीत्वा दक्षिणतः पितृतीर्थेन पात्रोद्धारणासमर्थ्यादेवतीर्थेन वा। ओं अद्यामुकगोत्र पितरमुकशर्मन् अवने निक्ष्व स्वधा। इति कुशोपर्य्यवनेजनं दद्यात्। ततः सर्वस्मादन्ना-त्किञ्चिदन्नमुद्धृत्य मध्वाज्यतिलजलसहितमेकत्र चरुस्थालीपात्रे कृत्वा पिण्डं निर्माय मधुघृताभिघारितं सतिलं सव्यो-पगृहीतदक्षिणहस्तेनावनेजनस्थाने। ओं अद्यामुकगोत्र पितरमुकशर्मन्नेष ते पिण्डः स्वधा। इति दद्यात्। ततो ले-पभागभुजस्तृप्यन्तु। इति दर्भमूले करं प्रोञ्छ्याचम्य हरिं स्मृ-त्वा। अत्र पितर्मादयस्व यथाभागमावृषायस्व। इति पठि-त्वा वामावर्त्तेनोदङ्मुखीभूय प्रीतमनाः श्वासं नियम्य तेनैव यथापरावृत्य। ओं अमीमदन्त पितर्यथाभागमावृषायिष्ट। इति जप्त्वा पूर्ववत्पिण्डोपरि प्रत्यवनेजनं दत्त्वा। नीवीं वि-स्रस्य। कृताञ्जलिः। ओं नमस्ते पितारसाय नमस्ते पितः शोषाय नमस्ते पितर्जीवाय नमस्ते पितः स्वधायै नमस्ते पि-तर्घोराय नमस्ते पितर्मन्यवे। नमस्ते पितः पितर्नमस्ते गृ-हान्नः पितर्दत्त सतस्ते पितर्देष्म। इति पठित्वाऽऽक्षिपः सूत्रं क्षिपेत्। ततः एतत्ते पितर्वासः। इति मन्त्रं पठित्वा। ओं

त्यामुकगोत्र पितरमुकशर्म्मन्नेतत्ते वासः स्वधा । इति वस्त्र-
सूत्रं । केवलमूर्णां च पश्चाद्दर्भोपरि यजमानगात्रलोम वा
पिण्डोपरि दद्यात् । ततस्तथैव पितरमुद्दिश्य गन्धादिकं
दद्यात् । ततो ब्राह्मणमाचमय्य तदीयकरे । शिवा आपः
सन्तु । इति जलम् । सौमनस्यमस्तु । इति पुष्पाणि । अक्षत
ञ्चारिष्टमस्तु । इत्यक्षतादि दद्यात् । पार्वणोक्तप्रकारेण वा तत
ओं अद्यामुकगोत्रस्य पितुरमुकशर्म्मणो दत्तैतदन्नपाना-
दिकमक्षय्यमुपतिष्ठताम् । इति तिलयुक्तमक्षय्योदकं विप्रकरे
दद्यात् । ततः प्राङ्मुख उपवीती कृताञ्जलिराशिषो गृह्णी-
यात् । अघोराः पितरः सन्तु । सन्त्वित्युक्ते । गोत्रन्नो वर्द्धता-
मित्यादिपार्वणवत् । अथ पिण्डोपरि सपवित्रदर्भानास्तीर्य ।
स्वधां वाचयिष्ये । इति पृष्ट्वा । वाच्यताम् । इत्यनुज्ञातः । पित्रे
स्वधोच्यतामिति वदेत् । अस्तु स्वधा । इत्युक्ते सपवित्र-
दर्भान्तरितपिण्डोपरि । ओं ऊर्ज्जं वहन्तीरमृतं घृतं पयः
कीलालं परिस्रुतम् । स्वधास्थ तर्पयत मे पितरम् इति वा-
रिधारां दद्यात् । ततः पिण्डमाघ्रायोत्थापयेत् । ततः पि-
ण्डाधःस्थदर्भं चोल्मुकमग्नौ निःक्षिप्यार्घ्यपात्रमुत्तानीकृत्य य-
थाशक्ति दक्षिणां दद्यात् । अथ विप्रमुत्थाप्याङ्गुष्ठं गृहीत्वा
गृहीतोदकपात्रोऽभिरम्यतामिति विसर्जयेत् । अभिरतोऽस्मी-
ति प्रतिवचनम् । तत आमा वाजस्येत्यादिनाऽनुव्रज्योदकं-

धारया प्रदक्षिणीकृत्य गृहं प्रविश्य पिण्डप्रतिपत्तिब्राह्मणविसर्जनादिपूर्ववत्। इति प्रतिवर्षकर्त्तव्यैकोद्दिष्टप्रयोगः समाप्तः।



अथाभ्युदयिकश्राद्धम्॥

तच श्राद्धदिने प्रातरेव निमन्त्रणम्। न पूर्वेद्युः प्राङ्मुख उदङ्मुखेभ्यो दद्यात्। उदङ्मुखो वा प्राङ्मुखेभ्यः। आसनादौ सर्वत्र ऋजवो दर्भाः। अवकिरणादितिलकार्यं सर्वं यवैः कर्त्तव्यम्। स्वधास्थाने स्वाहा नमः। इति वा प्रयोजयेत्। देवतीर्थेन ऋजुपाणिना पातितदक्षिणजानुना उपवीतिना प्रदक्षिणं कर्त्तव्यम्। नापसव्यकरणम्। न पितृतीर्थेन न वामजानुपातनम्। अन्येऽपि दक्षिणाप्लवादयोऽसाधारणाः पित्र्या धर्मा निवर्त्तन्ते। किन्तु दैवेन धर्मेणात्र पितृणामुपचारः। इतरे विशेषाः प्रयोग एव व्यक्ता भविष्यन्ति। अत्र च प्रथमं मातृपितामहीप्रपितामहीनां श्राद्धम्। ततः पितृपितामहप्रपितामहश्राद्धम्। ततो मातामहप्रमातामहवृद्धप्रमातामहश्राद्धम्। श्राद्धत्रयेऽपि युग्मब्राह्मणा देवपूर्वकाश्च। जीवन्मातृकेण तु पित्रादिपरकश्राद्धमेव कर्त्तव्यम्। पित्रादित्रिके मातामहादित्रिके च यो जीवति तं परित्यज्य परं पुरुषमन्तर्भाव्य त्रिकपूरणम्। यत्र तु पित्रादयस्त्रयो जीवन्ति तत्र परेषां त्रयाणां नान्दीमुखसञ्ज्ञकानां श्राद्धमिति। श्राद्धार्थं

अथ पितृपदं जनकादित्रिकपरम्। तदा मातामह्याद्यप्राप्तिः। तत्परमिति चेत् न। तथाऽपि मातृपत्नीपितृव्याद्यप्राप्तेः। तत्रापि पितृपदमिति साहस एव। पितॄणां प्रत्येकमुद्देश्यत्वं चाप्यनुमन्तव्यमित्यननुगमः। ब्राह्मणस्वीकारणं च श्राद्धपदार्थान्तर्गतम्। तदङ्गं वा। प्रथमे जलप्रक्षेपादिपक्षे प्रधानविधिरपि न स्यादिति शिष्टाचारविरोधः स्यात्। ब्राह्मणस्वीकारणविधिश्च श्राद्धे न स्यात्। द्वितीये त्वन्योन्याश्रयः श्राद्धे निरूपिते तदङ्गसम्बन्धः। तस्मिंश्च सति श्राद्धनिरूपणमिति अत्रोच्यते। यत्र प्रमीतदेवताकत्वं यत्र च ब्राह्मणस्वीकारणाङ्गत्वमसौ पात्रालम्भपूर्वकस्त्यागविशेषस्तेन। श्राद्धविहितः श्राद्धपदाभिधेयः। प्रधानं च ब्राह्मणस्वीकारणाविशिष्य तत्र तत्र विशेषे क्वचिदुपदेशात्, क्वचिच्चातिदेशात्। एवं पित्रादिभिरपि। एवं च श्राद्धपदेनाप्युद्देशेन विरोधः श्राद्धपदस्य त्यागरूपत्वात्। अङ्गाकारविधिस्तु तदुपलक्षणद्वयपरिचितेऽपि नायुक्त इति न काचिदनुपपत्तिः। एवं च वैश्वदैविके जीवश्राद्धे च श्राद्धपदं गौणम्। तदिदं श्राद्धं याग एव पितृमेधादिपदेनाभिधानात्। देवतोद्देशेन त्यागादिलक्षणसत्त्वाच्च। दानमिति पितृद्विजकर्तृकस्वीकारः। तन्न सम्प्रदानविरहात्। तथा हि न तावत्पित्रादीनां सम्प्रदानत्वं स्वीकारविरहात्। नापि ब्राह्मणानां तदुद्देश्यत्वविरहात्। एवं

च पितृभ्यो दद्यात्। अर्घपिण्डवर्जितमिति निषेधोऽप्यतिदि-
ष्टस्याङ्गस्य एव स्यात्। त्रिषु पिण्डः प्रवर्त्तत इति पिण्डपितृ-
यज्ञविषयम्। नच। पिण्डदानस्यैव प्रधानत्वात् अङ्गमुखेन वा
प्रधानस्य निर्देशः। सोमपानेनेव ज्योतिष्टोमस्य। गन्धादि-
दानमपि श्राद्धाङ्गम्। उक्तानुपपत्त्वाद्दानत्यागस्यैव श्राद्धत्वा-
दुदकादिश्राद्धेऽप्युदकादीनामसत्त्वात्। अन्नस्थाने पानीया-
न्न विरोधः। यत्तु मतं श्राद्धं दद्यादिति श्राद्धपदं राजसू-
यादिवत्। प्राकरणिकसर्वदानपरमित्यासनदानादिकमपि
प्रधानमिति तन्न। श्राद्धं कृत्वा प्रयत्नेन त्वरा क्रोधवि-
वर्जितः। उष्णमन्नं द्विजातिभ्यः श्रद्धया प्रतिपादयेत्। इत्यादि
नाना वाक्येष्वन्नत्यागे एव श्राद्धपदप्रयोगात्। अर्घावाह-
नवर्जितमिति निषेधानुपपत्तेः। अर्घादिसम्पत्तावप्यन्नत्यागे
एव श्राद्धपदप्रयोगात्। अर्घावाहनवर्जितमिति निषेधानु-
पपत्तेः। अर्घादिसम्पत्तावप्यन्नत्यागे श्राद्धं कृतमिति
प्रयोगाच्च। तस्मादन्नत्याग एव श्राद्धमितरत्तदङ्गमिति।
अत्र च पित्रादित्रिकश्राद्धे मातामहादित्रिकश्राद्धे चैक-
प्रयोगानुष्ठेयम्। तत्र पाद्यासनतिलविकिरणाग्नौकरणान्न-
पात्रविकिरणादिकमारादुपकारमङ्गजातं तन्त्रेणानुष्ठेयम्।

पात्रे निधायाथ न्युब्जमुत्तरतो न्यसेत्। संस्रवणादि पितृपात्रे निधायेति सम्बन्धः। संस्रवणं। आदिपदेनार्घदानावशिष्टतिलादीनां परिग्रहः। तेनायमर्थः। इतरार्घपात्रद्वयवर्त्ति संस्रवादि पितृपात्रे निधातव्यम्। एवं मातामहादिपात्रत्रिकेऽपि इतरपात्रद्वयवर्त्तिसंस्रवादि मातामहपात्रे च निधातव्यम्। मातामहानामप्येवमिति सामान्येनातिदेशात्। न्युब्जमधोमुखम् उत्तरतो ब्राह्मणादुत्तरस्यां दिशि इति कल्पतरूक्तम्। सा हि प्रचारभूमिरतस्तत्र स्थापने पातनं निषिद्धं दुर्वारं अनुष्ठानासौकर्यं च स्यात्। तस्मादुत्तरपदं वामप्रदेशपरं तत्रापि मुख्यत्वात्। दक्षिणवैपरीत्याद्वा। शतपथश्रुतावपि तस्मादस्य दक्षिणतो मध्ये भवति तं पुण्यलक्ष्मीकं इत्याचक्षते उत्तरतः स्त्रियाः। उत्तरत आयतना हि स्त्रीत्युत्तरपदं वामपरम्। अतएव रत्नायुधीये श्राद्धाध्याये उत्तरतो ब्राह्मणवामप्रदेश इत्यर्थ इति लिखितमिति केचिदाहुः। अर्घार्थं पवित्रं पिण्डोपरि स्तरणार्थं धर्त्तव्यम्। ननु तत्संहितस्यैव पितृपात्रस्य न्युब्जीकरणमिति मन्दम्। आचारविरोधात्। संस्रवणादीत्यादिपदेन तस्यापि ग्रहणाच्च। कल्पतरावप्यादिपदेन तिलपुष्पपवित्राणां ग्रहणमिति व्याख्यानम्। अर्घदानानन्तरं "प्रथमे पात्रे संस्रवान्समवनीय" इत्यादिमात्याद-नः। तत्र संस्रवपदं ब्राह्मणहस्तगलितजलपरमिति निबन्धकारः

मित्युक्तेरेकपत्रात्मकमेव पवित्रमिति भ्रमः कार्यः। लक्षणविरोधात्। छान्दसा गन्धद्वारामिति मन्त्रं गन्धप्रक्षेपे। ओं श्रीश्चतेइत्यादिमन्त्रं पुष्पप्रक्षेपे पठन्ति। तदपि च प्रमाणाभावादुपेक्षितम्। एवमर्घपात्रस्थापनार्थं मण्डलिकाकरणम्। द्वारप्रदेशे तिलजलसमेतपात्रस्थापनम्। "अग्नौ कृतं प्रकृतमित्यादि च प्रमाणाभावादुपेक्षितम्। आचारस्यापि सर्वसिद्धस्य सर्वत्राभावात्। ओं शन्नोदेवीति मन्त्रः। ओं तिलोऽसीति मन्त्रस्य प्रत्यर्घपात्रमावर्त्तनीयः। मन्त्रप्रकाश्यजलादेः क्रमेण प्रक्षेपात्। ओं या दिव्या आप इति मन्त्रोऽपि भेदेनैव मन्त्रप्रकाश्यानामपात्रक्रमेण दानात्। एवमन्यत्रापि मन्त्रावृत्त्यनावृत्ती बोध्ये। गन्धादिकं ब्राह्मणपूजनार्थमेव न तु पित्राद्युद्देशेन त्यक्तमिति परिहरः। तथा हि "गन्धान्ब्राह्मणसात्कृत्वा पुष्पाण्यृतुभवानि च। धूपं चैवानुपूर्वेण अग्नौ कुर्यादतः परमिति परिशिष्टवचने सात्प्रत्ययाद्ब्राह्मणार्थतैव प्रतीयते। अनुलेपनवस्त्रपुष्पालङ्कारैः शक्त्या विप्रान्समभ्यर्च्येति विष्णुवचनात्। स्नानानागतान्पाद्यार्घाचमनीयदर्भासनानुलेपनधूपसमनोभिरभ्यर्च्येति निगमाच्च। ब्राह्मणार्थतैव प्रतीयते। तत्र। पितृद्देशेन त्यक्तस्यैव ब्राह्मणार्थत्वात्। श्वेतचन्दनकर्पूरकुङ्कुमानि शुभानि च। विलेपनार्थं दद्यात्तु यदन्यत्पितृवल्लभमिति ब्रह्मपुराणे पितृवल्लभत्वेनाभिधानात्त-

दर्थकमेव । तस्मात्पित्राद्यर्थं गन्धमाल्यमुत्सृज्य ब्राह्मणस्यै
त्कर्त्तव्यमिति । तथा च मार्कण्डेयपुराणे । निवेदितं च यत्ते
पुष्पगन्धादिलेपनम् । तद्गपितानथ स तान्ददर्श पुरतः स्थि
तान् । सः रुचिः । तान्पितॄनित्यर्थः । एवं च पाद्यार्घदानेऽ
ब्राह्मणमात्रार्थतेति भ्रमो हेयः । वायुपुराणे तु । यद्गन्धादि
दानानन्तरं कांस्यमत्रादिदानमुक्तं तत्रापि पित्राद्युद्दे
तस्य ब्राह्मणादि प्रतिपत्तिर्बोध्या । लोकश्रेष्ठतमं यच्च स्वा
त्मनश्चापि यत्प्रियम् । सर्वं पितॄणां दातव्यं तदेवाक्षयमिच्छ
तेति प्रक्रमात् । आचमनीयं शौचार्थत्वात् । दक्षिणादान
मानत्यर्थत्वाच्च ब्राह्मणार्थमेवेति । केचित्तु कृतशेषमन्नं ब्रा
ह्मणेभ्यः प्रदाय पितृभ्योऽवशेषयेत् । इति हारीतोक्तेरग्नौक
रणशेषं पिण्डार्थं धर्त्तव्यमित्याहुः । तन्न । कृतशेषं दत्वेति
कात्यायनविरोधात् । हारीतस्तु शाखान्तरविषयः । मिता
क्षरायां तु स्थालीपाकसम्भवे अग्नौकरणशेषसहितस्थालीशेषे
पिण्डदानमतो कृतशेषं स्थाप्यम् । स्थालीपाकसम्भवे श्राद्ध
शेषमात्रेण अतस्तस्मिन्पक्षे अग्नौकरणशेषं न धर्त्तव्यमित्यु
क्तम् । एतच्च यद्यदन्नमुपभुक्तं ततस्तत्स्थालीपाकेन सह पि

मच संपादमि
कृतशेषं दत्वा पात्रमालभ्य जपति पृथिवी
।" तथा वैष्णव्यर्चा यजुषा पात्रत्रयेऽपगा-

श्रोष्ण एव स्विष्टमन्नं दत्वा । यजुषा वेति वाकारोऽत्र समुच्चय इति केचित् । अन्ये वाकारस्थाने चकारमेव पठन्ति । तदिदं पक्षद्वयमाचारमाश्रित्यैव घटते । ते चेद्वाकारान्तःस्याहिकल्पएवेति । अत्र कृतशेषमात्रे एवाङ्गुष्ठारोपणं पश्चादन्नान्तरपरिवेषणमिति धर्मो ज्ञेयः । ततः पात्रालम्भादिपूर्वक उत्सर्गः । दद्यादुत्सृजेदित्यर्थः । कृतशेषापेक्षयाऽन्नान्तरस्येति शेषः पृथगुत्सर्गानभिधानात् । तेषां शेषमन्नमनुज्ञाप्य सर्वमन्नमेकत उद्धृत्योच्छिष्टसमीपे दर्भेषु त्रींस्त्रीन्पिण्डानवनेज्य दद्यात् । शेषमन्नमनुज्ञाप्य शेषमन्नं किं क्रियतामिति प्रश्नपूर्वकमिष्टैः सहोपभुज्यतामित्यनुज्ञां गृहीत्वेत्यर्थः । अत एवाश्वलायनगृह्ये "स्वयमभिमतेऽनुमते वेति ।" अनुमते इति पदं तदीयवृत्तौ कल्पतरौ चैवमेव व्याख्यातम् । ब्रह्मपुराणे "स तानाह पुनः शेषं क देयं चान्नमित्यपि । इष्टेभ्यो दीयतामेतदिति तं प्रवदन्ति ते इत्यनुज्ञापनमुक्तम् । यत्तु व्याख्यातं शेषदन्नात्पिण्डार्थमुद्ध्रियतामित्यनुज्ञाप्याज्ञा । तदस्मात्तमसाम्प्रदायिकं चेति । दर्भेष्वित्यादि अत्रावनेजनमपि दर्भेष्वेव श्रुतत्वात् । पिण्डमात्र एवदर्भाधारत्वमवनेजनं तु रेखायामेव । पिण्डपितृयज्ञवदुपचार इति कात्यायनाभिधानात् । पिण्डपितृयज्ञे च रेखायामेवावनेजनश्रुतेरिति चेत् । सत्यमतिदेशादेवावनेजनमपि प्राप्तमिति व्यर्था श्रुतिः स्यात् दर्भश्रुति-

तु केचिदिच्छन्ति पण्डिताः । इति मार्कण्डेयपुराणवचनात् ।
नित्यश्राद्धेऽपि विकल्पः । स च षट्पुरुषश्राद्धानन्तरं नित्यकं
न कर्त्तव्यम् । श्राद्धानन्तरं न तु कर्त्तव्यमिति व्यवस्थितः

धर्माः। अतएव स्वदितमिति तृप्तिप्रश्नतृत्यादिविशेषविधेश्च स्वरसः। सपिण्डीकरणे तु प्रेतश्राद्धमेकोद्दिष्टरूपमितरच्च पार्वणरूपमित्युभयधर्ममेलकः। आभ्युदयिके यवैस्तिलार्था इति तिलकार्ये यवविधेर्न स्वधां प्रयुञ्जीतेति निषेधाच्च पार्वणधर्माः नित्येऽपि "नित्यश्राद्धमदैवं स्यात्" इतिनिषेधात्पार्वणधर्माः। तीर्थश्राद्धेऽप्यर्घावाहनवर्जितमित्यभिधानात्पार्वणधर्माः। एवं श्राद्धान्तरेष्वपि पार्वणधर्मा ऊह्नीयाः। पार्वण एव श्राद्धपदं मुख्यमन्यत्र धर्मातिदेशिकमग्निहोत्रपदवदिति, केचित् तत्तद्वारतिथिनक्षत्रादिविहितकामश्राद्धे तु पार्वणधर्मा व्यक्ता एव "कामाय विहितं काम्यमभिप्रेतार्थसिद्धये पार्वणेन विधानेन तदप्युक्तं खगाधिप।" इति तदप्युक्तं यथाक्रममिति शातातपवचनात्। तस्मादितराणि श्राद्धानि पार्वणवैकृतानि तत्तद्विधिनिषेधकृतस्तु विशेषप्रयोगादेव प्रकाश्यते। एकोद्दिष्टे तु बहुवचनान्तपितृपदयुक्तमन्त्रे एकवचनोहः। "एकवचनवन्मन्त्रानूहेतैकोद्दिष्टे" इति विष्णुवचनान्न्यायाच्च। अत एवाणोधर्माधिकरणिक एकवचनोहेनैव मन्त्रान्रत्नपद्धतौ लिखतिस्म। एवं च पितृव्यादिश्राद्धे तत्तत्पदोहः। स्त्रीश्राद्धे तु मात्रादिपदोहः। सपिण्डीकरणे पात्रन्युब्जीकरणमन्त्रः। प्रेतश्राद्धे एकवचनेन। इतरश्राद्धे बहुवचनान्त एव प्रयोज्यः [illegible]मन्त्रदानमन्त्रस्तु चतुर्ष्वपि भेदेनैव प्रकाश्यभेदात्। प्र

नाष्वपि भेदेन पाठात् । अत्रापि प्रेतश्राद्धे एकवचनान्तता
कवचनवन्मन्त्रोहविधानात् । इतरत्र तु बहुवचनान्तमेव
क्तौ बहुवचनस्य प्रयोगसाधुत्वात् । अत एवैकपाणिकाया
वक्तौ बहुवचनान्तमेव पात्रपदमिदमित्युक्तं पात्राधिकरणे
न्त्रान्तरे तु पितृसपिण्डने बहुवचनान्तपितृपदयुक्तमेव
र्थोऽयम् । पित्रादीनामेकैकस्य प्रकाश्यत्वात् । भ्रातृसपिण्डने
तयैमन्त्रा भ्रातृप्रकाशनार्थं भ्रातृशब्दत्वात् । पित्रादिप्रकाशनं
चाभिक्तनिमेषेण भेदेनैव । एवं पितृव्यसपिण्डने पितृव्यशब्द-
त्वात् पितृशब्दनाश । पितृव्यसपिण्डनं पितामहादिभिः सह
कार्यमतः कथं पितृशब्द इति चेत् न । पितृशब्दस्य पितामह-
हाद्यावपि प्रकृतौ तु प्रयुक्तत्वात् । अन्यथा गवेति चेत् न भर्त्री-
त्यपि साऽस्तु । [illegible] किमित्यवाच्यं पदं प्रयो-

नेव सर्वमन्त्रः । यदि पितामह्यादिभिस्तदा मातृपदोह एव सर्वमन्त्रेषु । पत्नीसपिण्डने तु एकवचनपत्नीशब्दस्यान्बहुवचनान्तमातृशब्दवानेव सर्वमन्त्रः । पित्रादित्रयपत्नीस्तु पूज्या मातॄः प्रति द्विजाः । स्त्रीणामेव तु तद्यस्मान्मातृश्राद्धमतः स्मृतमिति शङ्खवचनात् । यजमानजनन्यादिव्यतिरिक्तपित्रादिपत्नीनामपि तत्र श्राद्धमतः कथं मातृशब्देन सर्वप्रकाशनमिति चेत् । न आवश्यकत्वात् । मातॄरिति पदात् । तिस्रोऽपि मातरः पूर्वं पूजनीयाः प्रयत्नतः । इतिशातातपवचनाच्च मातृपितामहीप्रपितामह्य एव पित्रादित्रयपत्न्योऽभिमता तत्पत्न्योऽपीति युक्तं चैतत्पश्यामः । तस्मान्मातृपदोह एव न तत्र पितामह्यादिपदोहः । स्वायत्तत्वान्मातृपितामहीप्रपितामहीपदप्रयोगएवेति केचित् । तन्न । एकपदेनैव सर्वप्रकाशनसम्भवे पदावृत्त्ययोगात् । एवं च पिण्डसूत्रदानमन्त्रे पितामह्यादिपदमप्यविरुद्धमावृत्तेरावश्यकत्वात् । एवं पित्रादिसपिण्डनेऽपि तत्र पितामह्यादिप्रयोगोऽप्यविरुद्धः । केचिन्मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः । मन्त्रोहेन यथान्यायमन्येषां मन्त्रवर्ज्जितमिति विष्णुवचनात् । षट्पुरुषव्यतिरिक्तश्राद्धे सर्वमन्त्रनिवृत्तिस्तत्रैव वाक्यात् यथेत्याहुः । परिश- रादयस्तु शुन्धन्तां पितर इत्यादिमन्त्रोऽयमेजनप्रत्यपनेजनयो। राश्वलायनोक्तस्तथैव मातामहादिविषये [illegible] पि-

र्ने तु मन्त्रान्तरस्येत्याहुः । अत्र वासना श्राद्धकल्पएवोक्ता । अत्र पितर इत्यादि मन्त्रेषु पितृपदेनैव मातामहादीनामपि प्रकाशनसम्भवान्न दोषः । शुन्धन्तामिति मन्त्रे तु पित्रादिविकल्पभेदेनोपादानान्न मातामहाद्यन्तर्भावः । अतस्तत्रयोगः । एवं च प्रकृतत्वात्तस्यैव निषेध इत्येवरूपा । अपरे पात्रन्युब्जीकरणमन्त्रपिण्डवस्त्रदानमन्त्रोर्ध्वं वदन्तोरिति मन्त्रेषु मातामहादिपदोहं मन्यन्ते । पृथक्पाठस्यावश्यकत्वात् । अत्र चान्येषामितिपदेन पितृव्यादीनामभिधानम् । तेषां क्षयाहादौ यत्र श्राद्धं प्राप्तं तत्रापि मन्त्रमात्रनिषेधोऽयनेनोपपदाकृष्टतात्पर्यकत्वात् । नत्विदमेव वाक्यममावास्यादिश्राद्धविषये 'ये सपिण्डीकृताः प्रेतास्तेषां तु न पृथक्क्रियेति सामान्यतएकोद्दिष्टनिषेधात् । पितृव्यादिवाक्यानुपपत्तेः । स-

यन्ति। स्त्रीकर्तृके शूद्रकर्तृके च सर्वस्मिन्नेव श्राद्धे सर्वमन्त्र-
निवृत्तिरिति तत्रोपशङ्कैव नास्ति। तथा च मनुः। नास्ति
स्त्रीणां क्रियामन्त्रैरिति धर्मो व्यवस्थित इति। मत्स्यपुराणे-
ऽप्युक्तम्। शूद्रोऽप्यमन्त्रवत्कुर्यादिति। "अमन्त्रस्यापि शूद्रस्य
विप्रो मन्त्रेण गृह्णते" इति वाराहपुराणीयमशौचान्तश्राद्ध-
विषयम्। प्रकरणादनुज्ञातोऽस्य नमस्कारो मन्त्र इति गौत-
मवचनान्नमस्कारेणैव गोत्रनामाद्युच्चारणपूर्वकं शूद्रः श्राद्धं
कुर्यात। अनुपनीतस्तु श्राद्धे मन्त्रं पाठयितव्यः। नाभिव्या-
हारयेद्ब्रह्म स्वधानिनयनादृते इति तेनैवानुज्ञानादिति तथा-
प्युक्तो वेदितव्यः। एवमन्यत्राप्यूहनीयः। आवाहनमन्त्र-
स्तु नोह्यः। अदृष्टार्थत्वात्। श्राद्धदेशसन्निहिताः पितरः श्राद्ध-
भोक्तारोऽत आह्वानरूपमावाहनं दृष्टार्थमतस्तदर्थं तन्मन्त्रोऽ
इति चेन्न। देवतासान्निध्यादेर्देवताधिकरणे निरासात् अत-
स्तन्मन्त्रोच्चारणादेवादृष्टमिति नोह्यः। अर्थापरत्वानुरोधा-
दनुमानद्वारेणादृष्टमिति चेन्न। तथाऽप्यविकृतादपि तदेव
ध्यानमदृष्टजनकमिति कथमूह्यः। नान्तरीया पित्रादिस्मृतिः।
"दृष्टं तदेव च प्रयोजनमाश्रित" न्यायादिति चेत् तर्हि प्राकृ-
तदृष्टाभावे विकृतौ नोह इति त्वयैव दूरनिरस्त ऊहः। न चापि
विवक्षितविवेके प्रमाणाभावात्। पित्रादिस्मृत्यर्थमावाहनम-
न्त्र इतिवान्यप्रजल्पितम्। आवाहनमन्त्रत्वव्याघातात्। स्मृत-

प्रभेदएवावाहनमिति चेत्। भवतु तथापि तस्याः स्मृतेस्तिल विकिरणादि पदार्थव्यवहितायास्त्यागकालपर्यन्तमनुवृत्तेर्न दृष्टार्थतेति विफलः प्रयासः। अतएव पशुनयनकालीनवह्निगन्धस्य वङ्क्युहरणकालत्वं दृष्टार्थत्वादिति षड्क्यधिकरणे उक्तम्, विजातीय व्यवधानाभावाच्च। स्मृतिसन्ततिद्वारापि दृष्टार्थता नवोक्ता। नैव तथेति। आयन्तु न इति मन्त्रेऽपि नोहः। अदृष्टार्थत्वात्। एवमन्येष्वपि देवताभ्यः पितृभ्यश्चेत्यादिजपमन्त्रेऽपि नोहः। अनर्थपरएवोच्चारणे जपपदप्रवृत्तेश्च। केचिदावाहने उशन्तस्त्वेत्यायन्तुन इतिमन्त्रनिवृत्तिमेकोद्दिष्टे मन्यन्ते तन्न। "उशन्तस्त्वेत्यनयावाह्यावकीर्यायन्तु न इति जपत्वेति कात्यायनेनावाहनविकिरणानन्तरं जपत्वेनाभिधानात्। गोभिलेन त्वावाहनएवायं मन्त्रः कथित इति छन्दोगानामेकोद्दिष्टे निवर्त्तते, न तु वाजसनेयिनामिति। ज्ञावाक्षिः।

ग्निभिः साग्निभिश्चैकोद्दिष्टं कर्त्तव्यमिति । अन्ये तु साग्नीनां द्वादशपुत्राणामपि पार्वणविधिरेव मत्स्यपुराणात् । जाबालिवचनं तु निरग्निमात्रे व्यवस्थाबोधकमित्याहुः । तदयुक्तम् । एवं हि निरग्निमात्रविषयाणां "मृताहे पार्वणं कुर्वन्नधोऽधो याति मानवः" इत्यादीनां वाक्यानां बहूनामौरसमात्रैकगोचरताया बाधः स्यात् । साग्निनिरग्निविषयं जाबालिवचनम् सङ्कोचादित्यपरे । तन्न । "पार्वणेन विधानेन देयमग्निमता सदे"ति । साग्निविधेर्निरवकाशत्वापत्तेः । जाबालिविहितैकोद्दिष्टानुवाद इति चेत् न, व्यर्थत्वापत्तेः । तस्मात्साग्निविधिरौरसक्षेत्रजविधिश्च तुल्यविषयः । अथ कामधेनुलिखितवाक्यानि । आपस्तम्बः । अपुत्रा ये मृताः केचित्स्त्रियो वा पुरुषाश्च ये । तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम् । एतेनापुत्रस्य सर्वस्यैव साग्निना निरग्निना चैकोद्दिष्टमेव श्राद्धं कर्त्तव्यमित्युक्तम् । अतः पत्न्याऽप्यपुत्रस्य पत्युरेकोद्दिष्टमेव श्राद्धं कर्त्तव्यम् पितृबन्धुसपिण्डेभ्यः स्त्रीकुमारीभ्यएव च । दद्याद्वै मासिकं श्राद्धं सांवत्सरमतोऽन्यथा । मासिकपदं दैनश्राद्धोपलक्षणम् । सांवत्सरं प्रतिवत्सराहे कर्त्तव्यम् । अयनदष्टाभरनदयार्थः । षट्पुरुषव्यतिरिक्तस्य सर्वस्यैव पुरुषस्य विवक्षितविविक्त्याऽस्य प्रेतश्राद्धातिरिक्तं मृताहमात्रे श्राद्धं कर्त्तव्य इतिवाक्यप्रजातोऽन्यथेति" नियमात् ।

पितृव्यादिश्राद्धमयुक्तम्। स्त्रियाश्चाभ्युदयिकेऽन्वष्टकायां च श्राद्धं विशेषविधिः। एवं च गयास्वर्गश्राद्धे च विशेषविधिः पुंस्त्रियाश्चेति श्राद्धकल्पे उक्तम्। गयायामपि विशेषविधेरन्यस्यापि श्राद्धमावश्यकम्। पितृव्यादिश्राद्धं गयायां एव। इच्छयात्वमावास्यादावपि कर्त्तव्यमिति केचित्। तत्र चापुत्रादिसर्वत्रैकोद्दिष्टविधिः पूर्ववाक्यात्। पूर्ववाक्येऽपुत्रस्य श्रवणात्। सपुत्रस्य भ्रात्रादेः साग्निना पार्वणमेव कर्त्तव्यमिति चेन्न। पुत्राभावेऽन्यस्य विधानात्। सपुत्रस्याऽप्यन्येन कर्त्तव्यमित्यत्र प्रमाणाभावात्। मातृश्राद्धं तर्हि साग्निना पार्वणेन विधानेन कर्त्तव्यमिति चेन्नैवम्। सङ्क्रान्त्यादिविहितस्य मृताहनि निषिद्धस्य च पित्रादिकश्राद्धस्य प्रतिप्रसवः पार्वणेत्यादिना। अतो मातृकश्राद्धमेकोद्दिष्टविधिनाऽपिकर्त्तव्यम्। एवं च सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते। तत्र तत्र त्रयं कुर्याद्वर्जयित्वा मृताहनि। अमावास्यां क्षये यस्य प्रेतपक्षेऽथ वा पुनः॥ सपिण्डीकरणादूर्ध्वं तस्योक्तः पार्वणो विधिः। इतिशंखवचनद्वयेन पूर्वोक्तस्य पित्रादिकश्राद्धस्य मृताहनि निषिद्धस्यामावास्यादौ प्रतिप्रसवः। पार्वणो विधिरिति पार्वणश्राद्धप्रयोगइत्यर्थः, युक्तं चैतत्। अमावास्यायां प्रेतपक्षे च पार्वणश्राद्धप्राप्तेः। नैकः श्राद्धद्वयं कुर्यादिति चाभिधानात्। नचैवमन्यत एव पार्वणप्राप्तेर्वाक्यमिदं व्यर्थम्।

तिथिस्तस्य कर्त्तव्या न त्वन्या वै कदाचनेति । एवं चैकभक्तादिकः पूर्वदिननियमोऽशौचेऽपि कर्त्तव्यः । एकादशाहश्राद्ध इव विशेषविधेः । श्राद्धपूर्वदिनत्वमेव प्रयोजकम् । न तु शौचमपि प्रधानकर्त्तव्यताबाधापत्तेः । अतोऽमावास्यादिश्राद्धेऽपि पूर्वदिनेऽप्यशौचं तदाऽप्येकभक्तादि कृत्वा श्राद्धं कर्त्तव्यमिति । अशौचातिरिक्ते मृताहश्राद्धे श्राद्धप्रतिबन्धके विशेषमाह । लघुहारीतः । श्राद्धविघ्ने समुत्पन्ने यथाहेऽविदिते तथा । एकादश्यां प्रकर्त्तव्यं कृष्णपक्षे विशेषतः । विशेषतइत्युक्तेरसम्भवे शुक्लैकादश्यामपि कर्त्तव्यम् । मृताहाज्ञाने पक्षान्तरमाह प्रचेताः । अपरिज्ञातमृताहेऽमावास्यायां श्रवणदिवसे वा । अत्र मृताहनिमित्तकं श्राद्धं कर्त्तव्यमितिशेषः । अत्र च मृताहविशेषं जानन्नप्याद्य मृताह इति विस्मरणं श्राद्धविघ्नमेव बोद्धव्यम् । अथ वा अविदिते वेति श्राद्धविस्मरणमपि सङ्गृहीतं तस्याप्यज्ञानरूपत्वात् । प्रचेतो वाक्ये तु अमावास्यायां श्रवणदिवसे वेत्यभिधानात्तिथिविशेषाज्ञानमेव विवक्षितम् । तेनायमर्थः । विस्मृतं श्राद्धमेकादश्यामेव कर्त्तव्यम् । अज्ञातमृताहश्राद्धं त्वेकादश्याममावास्यायां श्रवणदिवसे वा कर्त्तव्यमिति विकल्पः । यद्यपि हारीतप्रचेतोभ्यां मृताहश्राद्धं पतितमेकादश्यादौ कर्त्तव्यमित्युक्तम् । एकादशाहश्राद्धमूनवार्षिकमूनषाण्मासिकं च न मृताहे कर्त्तव्यम् ।

सुताः कुर्युः पितामह्या सहैव त्विति लघुहारीतेनाप्यभिधानादिति सुकरो निर्णयः। न च वाच्यं यथा पाणिनिस्मृतिः "परिग्रहापरिग्रहाभ्यां साध्वपभ्रंशविवेकार्था" तथा राजनिबन्धोऽपि समूलस्मृतिविवेकार्थइति तथात्वे मानाभावात्। अथो यथाननूक्तमपि विष्णूक्तमाद्रियते तथेह यत्स्मृतिवचनं महाजनपरिगृहीतं तत्प्रमाणं स्मृत्यधिकरणन्यायात्। महाजनपरिग्रहप्रकारास्तु राजलिखितत्वादयः। न चैवं गौड़निबन्धानामपि प्रामाण्यापत्तिरिति निर्मूलवक्तृवचनत्वेन शिष्टैरनादृतत्वात्। स्मृतिमञ्जूषास्मृतिरत्नाकरादौ न तादृक् शिष्टपरिग्रह इत्याचारानुमतमेव तत्रस्थं गृहीतव्यमित्यलमतिप्रपञ्चेन। षोड़शप्रेतश्राद्धानि साग्नीनां निरग्नीनां चैकोद्दिष्टविधानेनैवेति। तत्र प्रकारद्वयम्। द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा। सपिण्डीकरणं चैव प्रेतश्राद्धानि षोड़शेतिपरिशिष्टादेकः प्रकारः। आद्यमेकादशाहश्राद्धम्। "आद्यमेकादशेऽहनीति" स्मरणात्। एकादशाहपदं शुद्धिदिनोपलक्षणम्। "तत्रादिः सूतकान्ते च भोजयेदयुजो द्विजानि" ति मत्स्यपुराणवचनात्। "ततः श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनीति" ब्रह्मवाक्ये अशुद्धिपदं चतुर्थादिदिनपरम्। कर्त्तुस्तात्कालिकी शुद्धिरित्यपि तत्रैव षाण्मासिककालद्वयमाह। एकाहेन तु षाण्मासा यदा स्युरपि वा त्रिभिः

तथाऽपि तुल्यधर्मकत्वात्तदपि तत्रैव कर्त्तव्यम् । सपिण्डीकरणमपि म्रताहकर्त्तव्यमेव पूर्वदिने एव संवत्सरपूरणात् पतितोदकुम्भदानप्रमाणमन्दम् । अद्यरथः कर्त्तव्यत्वात् । एतानि वाक्यानि राज्ञाऽलिखितत्वादनादेयानि । इति चित्तदयुक्तम् । कामधेनावपि राजनिबन्धवल्लिष्टपरिग्रह संशयस्तर्हीति चेन्न । राज्ञा लिखितस्वस्यादर्शनेनाप्युपपत्तेः न हि यावन्ति स्मृतवाक्यानि तावन्ति सर्वाण्यपि राज्ञा दृष्टानीति प्रमाणमस्ति । न च राजलिखनमेवाद्रियते, इत्य नियमः । रामायणादेरनादरप्रसङ्गात् । प्रचारादपि परित क्तमज्ञातमूलकमिति कल्पतरुकृता प्रतिज्ञानादेषां वाक्या त्यागान्निर्मूलत्वमिति चेन्न । अज्ञातमूलत्वस्य मूलसन्देहे न प्युपपत्तिः । कामधेनुकृतस्तु मूलनिश्चयो लिखनादेवेतीयत् दर्शिकाऽपि नानुपपत्तिः । केचित्तु । आचारोपदृष्टत्वादे कामधेनुं वर्णयन्ति । तन्न । एवं हि यत्राचारेऽपि द्वैविध्यं त का गतिः । यथा मातृसपिण्डीकरणं केचित्पितर्यपि स्वे पितामह्यादिभिः सह कुर्वन्ति । अन्ये पित्रादिभिः । अप्र माते च, स्वेन भर्त्रा सहैवास्याः सपिण्डोकरणं स्त्रियाः कामधेनुलिखितमधुदारोमयावत्पृमे पितरि पित्रादिभिरे नैव सपिण्डीकरणम् । "मातुः सपिण्डीकरणं पितामह्या सहेदितपरिशिष्टवचनं जीवत्पितृकविषयम् । गतिस्तुनि

पुनः कुर्य्युः पितामह्या सहैव त्विति लघुहारीतेनाप्यभिधानादिति पुनरो निर्णयः। न च वाच्यं यथा पाणिनिस्मृतिः "परिग्रहापरिग्रहाभ्यां साध्वपभ्रंशविवेकार्था" तथा राजनिबन्धोऽपि समूलस्मृतिविवेकार्थइति तथात्वे मानाभावात्। अथो यथामनूक्तमपि विष्णूक्तमाद्रियते तथैव यत्स्मृतिवचनं महाजनपरिगृहीतं तत्प्रमाणं स्मृत्यधिकरणन्यायात्। महाजनपरिग्रहप्रकाराश्च राजलिखितत्वादयः। न चैवं गौड़निबन्धानामपि प्रामाण्यापत्तिरिति निर्मूलवक्तृवचनत्वेन शिष्टैरनादृतत्वात्। स्मृतिमञ्जूषास्मृतिरत्नाकरादौ न तादृक् शिष्टपरिग्रह इत्याचारानुमतमेव तत्त्वं गृहीतव्यमित्यलमतिप्रपञ्चेन। षोड़शप्रेतश्राद्धानि साग्नीनां निरग्नीनां चैकोद्दिष्टविधानेनैवेति। तत्र प्रकारद्वयम्। द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा। सपिण्डीकरणं चैव प्रेतश्राद्धानि षोड़शेतिपरिशिष्टादेकः प्रकारः। आद्यमेकादशाहश्राद्धम्। "आद्यमेकादशेऽहनीति" स्मरणात्। एकादशाहपदं शुद्धिदिनोपलक्षणम्। "तत्रादिः सूतकान्ते च भोजयेदयुजो द्विजानि" ति मत्स्यपुराणवचनात्। "ततः श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनीति" शङ्खवाक्ये अशुद्धिपदं चतुर्थादिदिनपरम्। कर्त्तुस्तात्कालिकी शुद्धिरित्यपि तत्रैव षाण्मासिककालद्वयमात्र। एकाहेन तु षाण्मासा यदा स्युरपि वा त्रिभिः

न्यूनाः संवत्सरस्यैव स्यातां पाण्मासिके तदा। संवत्सरे इत्यन्वयः। प्रथमपाण्मासिकमूनपाण्मासिकपदेन द्वितीयपाण्मासिकमूनवार्षिकपदेन लोके प्रसिद्धम्। द्वादशमासिकानि मृताहे, "मृतेऽहनि तु कर्त्तव्यं प्रतिमासं तु वत्सरमि"त्यभिधानात्। सपिण्डीकरणं तु पूर्णवर्षे नवममासे पक्षान्ते त्रिपक्षे वा मृताहे वृद्धिदिने वा। अत्र संवत्सरान्त एव मुख्यकालः। अशक्तौ तु वृद्धौ वाऽपकर्षः। अपकर्षपक्षे च परिशिष्टमासिकानि श्राद्धदिनपूर्वमेवापकृष्य कार्याणि। तदन्तापकर्षन्यायात्। अथ वा द्वादशदिवसादारभ्य द्वा... मासिकानि निर्वर्त्य त्रयोदशेऽहनि सपिण्डीकरणम्। ... तु द्वादशदिनएव। अत्र च पक्षे पड्द्वादशदिनयोरूनपाण्मासिकोनवार्षिके। अथ वा एकादशाहश्राद्धं कृत्वा अपरदिनएव चतुर्दश श्राद्धानि कृत्वा सपिण्डीकरणम्। एते च पक्षानिरग्निरेव बोद्धव्याः। साग्निना तु दशरात्रानन्तरभाविनि दर्शे सपिण्डीकरणम्। ततः पिण्डपितृयज्ञाधिकारः, लघुहारीतः। सपिण्डीकरणं यावत्प्रेतश्राद्धानि षोडश। पृथङ्नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित्। मरीचिः। मुख्यं श्राद्धं ...सिमपर्य्याप्तावृतुं प्रति। द्वादशाहेन वा भोज्या ए-...करणे। अपर्य्याप्तावसामर्थ्ये सपिण्डीकरणाप-

विधिः । न चैवंविधेर्वर्षान्तसपिण्डनेऽप्यापत्तिः सपिण्डनोत्तरं
विधानात् । न च सपिण्डनं समाप्य तस्मिन्नेवाहनि तत्कर-
णापत्तिः, शेषभक्षणाद्युदीच्याङ्गं विना सपिण्डनसमापनायो-
गात् । वृद्धिदिने सपिण्डने त्वर्थादुदीच्याङ्गं विनाऽपि प्रेतत्व-
विमुक्तिः । न त्विहापि तथाऽपकृष्य कृतत्वात् । न कार्यमिति
तु मन्दा श्रद्धा । सपिण्डनान्तप्रेतश्राद्धानामेवापकर्षात् ।
षोडशश्राद्धप्रकारान्तरं । ब्रह्मपुराणे । नृणां तु त्यक्तदेहानां
श्राद्धषोडशसङ्ख्यया । चतुर्थे पञ्चमे चैव नवमैकादशे तथा ।
ततो द्वादशभिर्मासैः श्राद्धद्वादशसङ्ख्ययेति । अनयोः षोडश-
श्राद्धप्रकारयोर्विकल्पः । प्रेतत्वविमुक्तिरूपफलसाम्यात् । यत्र
सपिण्डीकरणनिषेधस्तत्र ब्रह्मपुराणीयकल्पः । यस्मिंस्तु प्रेत-
क्रिया सपिण्डीकरणाख्या सर्वैव निषिद्धा । एकादशाद्यश्राद्ध
ब्राह्मपुराणमतेन प्रयोगः श्राद्धकल्प एव दर्शितः । कात्या-
यनमतेनाच पद्यते । सपिण्डीकरणे ये समाना इत्यादि म-
न्त्रद्वयेनार्घपिण्डयोर्मेलनं कात्यायनाद्युक्तोऽसौ । हिरण्वादि-
युक्तं मन्त्रान्तरं न ग्राह्यमाकाङ्क्षाविरहात् । तदुक्तम् । स्मृ-
तिशास्त्रविकल्पस्तु आकाङ्क्षापूरणे सति । अतो ब्रह्मपुराणो-
क्तप्रकारेऽपि कात्यायनाद्यविरुद्धमेव ग्राह्यम् । एवमन्यत्रापि
परशाखोक्तमविरुद्धकाङ्क्षायां ग्राह्यमाचारादेरिति । अत्र स-
पिण्डितेनाविधिमासादिना । किन्तु सपिण्डीकरणं कर्त्तव्यम्

असंस्कृतौ न संस्कार्यौ पूर्वौ पौत्रप्रपौत्रकैः ॥ पितरं तत्र
स्कुर्यादिति कात्यायनोऽब्रवीत् । इतिपरिशिष्टवचनात् ।
चासपिण्डितेनापि पित्रा मातुः सपिण्डीकरणं वोद्धव्य
असपिण्डितेनापि सपिण्डनमिति सामान्यविवक्षणादि
माहः । मेलकस्तु दानानन्तरं कर्त्तव्यो न प्रथमं दानप्रा
पत्तेः । उक्तं च शातातपेन । निरूप्य चतुरः पिण्डान्पुत्रा
प्रतिनामतः । ये समाना इति द्वाभ्यामाद्यं तु विभजेत्त्रि
एष एव विधिः पूर्वमर्घपात्रचतुष्टये इति । निरूप्य द
आद्यं प्रथमदत्तं प्रेतपिण्डं, तेन प्रेतपूर्वमनुष्ठानमिति वि
ध्यति । एष एवविधिरित्यतिदेशादर्घेऽपि दानानन्तरमेवा
ष्टजलस्य मेलकः । शूद्रस्य द्विजैः पित्रादिभिः सह सपिण्ड
न कार्यम् । गीयते तु सपिण्डत्वं येषां शूद्रः कुलोद्भवः । स
शूद्रत्वमायान्ति यदि स्वर्गजितस्तु ते । इति शङ्खेन निन्दि
तत्वात् । पतिपुत्ररहितायाः स्त्रियः सपिण्डनं निषिद्धम्
अत्र पिण्डमेलकप्रेतत्वविमुक्तिर्यावत्यस्योदकादौ प्रेतश
निवर्त्तयन्ति अमस्त सः । साङ्गात्प्रधानात्सपिण्डनात्प्रेतत्ववि
मुक्तिरूपफलसिद्धेः । अत एव पिण्डमेलकानन्तराभिमर्शे
"एष वोऽनुगतः प्रेत" इत्यादिप्रेतशब्दवान्मन्त्रो यै लोपाक्तः ।
विभक्तानामप्येकैकेनैवैतानि षोडशश्राद्धानि कर्त्तव्यानि । स-

॥कपार्थक्ये सति पितापितामहादिश्राद्धशेषो भक्षणीयः ॥
संवत्सरं यावत्प्रत्यहं प्रेताय सान्नोदकुम्भो देयः। तत्र च द-
क्षिणामुखत्वादयः प्रेतधर्माः। ब्राह्मणाय च तत्प्रतिपादनीयम्
न तु ब्राह्मणाय दानमेतदिति दानधर्मः इति भ्रमः कार्यः।
"अहरहरन्नमस्मै ब्राह्मणायोदकुम्भं च दद्यादिति" पारस्क-
रवचनात्। प्रेतोद्देशेन त्यक्तस्य ब्राह्मणे प्रतिपादनमात्रावगते-
ऽस्मै प्रेताय सपिण्डीकरणापकर्षे तदनन्तरकुम्भदाने प्रेत-
शब्दो न कार्य इति विशेषः। अतएवोदकुम्भदानं न प्रेतत्ववि-
मुक्तिहेतुः सपिण्डनोत्तरमपि विधानात् एवं द्वादशाहश्रा-
द्धमपि न प्रेतत्वविमुक्तिहेतुः षोड़शश्राद्धवद्विभावात्। तथा।
अशौचान्तद्वितीयेऽह्नि शय्यां दद्याद्विलक्षणाम्। काञ्चनं पु-
रुषं तद्वत्फलवस्त्रसमन्वितम्। सम्पूज्य द्विजदाम्पत्यं नाना-
ऽऽभरणभूषणैः। वृषोत्सर्गं च कुर्वीत देया च कपिला शुभा।
इत्येतदपि मत्स्यपुराणीयशय्यादिदानं प्रेतहिताय न तु
प्रेतत्वविमुक्तये प्रमाणाभावात्। अशौचान्तादशौचान्तिम-
दिवसाद्द्वितीयेऽह्नि। अशौचान्तिमदिवसापेक्षयैव द्वितीयत्वं
तेन प्रथमशुद्धदिन इत्यर्थः। विलक्षणा उत्कृष्टा ताम्बूलाद्युपक-
रणयोगात्। नानाऽऽभरणभूषणैरिति भूषणपदं क्रियापरमतो
न पुनरुक्तिः। अत्र केचित्सम्पूज्येति क्त्वादर्शनाद्दम्पतीपूजा
वृषोत्सर्गाङ्गमित्याहुः। तन्मन्दम्। विनिगमनाविरहात्।

तस्मादुभयत्राऽप्यधिकारे फलभ्योऽधिनैक्यात्समानकर्त्तृकत्वात्
षोडशश्राद्धान्येव प्रेतत्वविमुक्तये ॥ अथ प्रेतत्वं नाम किम्
नारकिशरीरग्रहः। तथैव लोकप्रसिद्धिः। "यस्यैतानि न दी-
यन्ते प्रेतश्राद्धानि षोडश। प्रेतत्वं हि स्थिरं तस्य दत्तैः श्राद्ध-
शतैरपि। इति यमस्मरणादिति केचित्। तन्न नारकिशरीर-
ग्रहणस्य तत्तत्कालावच्छिन्नभोगार्थं तत्तद्दुरितारब्धस्य प्रे-
श्राद्धैर्नाशायोगात्। प्रेतशब्देऽश्राद्धयत्वमित्यपरे। तदपि
मनोरमं तन्निरासार्थं प्रवृत्त्ययोगात्। किञ्च "सपिण्डीक-
रणान्ता च ज्ञेया प्रेतक्रियाबुधैः" इति विधेर्योदेशोऽत्रापि
याया निवृत्तिः। उच्यते पार्वणश्राद्धानर्हत्वं प्रेतत्वं तत्तु षो-
डशश्राद्धैरपनीयते। पितृत्वप्राप्तिरपि पार्वणश्राद्धार्हत्वमेव नान्
काचित्। तथा च मत्स्यपुराणे। सपिण्डीकरणानन्तरमु
क्तम्। "ततः पितृत्वमापन्नः सर्वत्र श्राद्धभाग्भवेत्।" वारी
तोऽपि सपिण्डीकरणानन्तरमाह। "ततः प्रभृति वै प्रेतः पि
तृसामान्यमाप्नुयात्। विन्दति पितृलोकं च ततः श्राद्धं प्र
वर्त्तेत" इति। श्राद्धं प्रेतश्राद्धातिरिक्तं पार्वणाभ्युदयिकतीर्थ
श्राद्धादिविषयम्। देवीपुराणे। 'तीर्थेषु ब्राह्मणं नैव परीक्षेत
कदाचन। अन्नार्थिनमनुप्राप्तं भोज्यं तं मनुरब्रवीत्। स-
क्तुभिः पिण्डदानं च संयावैः पायसेन वा। कर्त्तव्यमृषिभि-
र्दृष्टं पिण्याकेन गुडेन वा। देयं तु तिलपिण्याकं भक्तिमद्भि-

नरैः सदा । श्राद्धं तु तत्र कर्त्तव्यमर्घावाहनवर्जितम् । श्वध्वा-
ङ्क्षगृध्रकाकानां नैव दृष्टिहतं च तत् । श्राद्धं तत् तैर्थिकं प्रोक्तं
पितॄणां तुष्टिकारकम् । अकालेऽप्यथवा काले तीर्थश्राद्धं तथा
नरैः । प्राप्तैरेव सदा कार्यं कर्त्तव्यं पितृतर्पणम् । पिण्डदानं
ततः शस्तं पितॄणां चातिवल्लभम् । विलम्बो नैव कर्त्तव्यो न
च विघ्नं समाचरेत् । संयावो घृतक्षीरगोधूमचूर्णसाधितो
भक्ष्यविशेषः । पिण्याकं तिलखलिरिति प्रसिद्धं । श्राद्धशेषेण
पिण्डविधानात् । पिण्डसम्बन्धमुखेन श्राद्धेऽप्येतान्येव द्र-
व्याणि फलचमसन्यायात् । तिलपिण्याकमिति तिलमात्र-
विधिः । अकाले विहिताऽमावास्यादिकालव्यतिरिक्ते न तु
निषिद्धेऽपि निषेधविरोधात् । प्राप्तैरेवेति प्राप्तिनिमित्तकं
श्राद्धमित्युक्तम् । तेनैकस्यां यात्रायामेकस्मिंस्तीर्थे सकृदेव
श्राद्धम् । यात्राभेदे त्वावर्त्तते । प्राप्तिभेदात् । पिण्डदानं तथा
शस्तमिति गृहमेधीयनयादुपकारकोपच्छेदेन पिण्डदाना-
तिरिक्ताङ्गनिवृत्तिर्नाशङ्कनीया अर्घावाहननिषेधवैयर्थ्यापत्तेः

प्रथमं पूज्याः पितरस्तदनन्तरम्। ततो मातामहानां च वि-
श्वेदेवास्तथैव चेति मत्स्यपुराणोक्तत्वात्। उत्सवानन्दहेतौ
सन्ताने सत्पुत्रोत्पत्ताविति यावत्। आदिपदेन ग्रन्थान्तरोक्त-
मङ्गलपरिग्रहः। मातामहानां पूज्येत्यन्वयः। विश्वेदेवास्तथैव
चेति पाठक्रमो नादेयः। श्राद्धत्रयेऽपि विश्वेदेवसम्बन्धो विशे-
षोपादानात्। विश्वेदेवविहीनं तु केचिदिच्छन्ति मानवाः।
इति मार्कण्डेयपुराणीयो मातृश्राद्धे देवश्राद्धनिषेधः। शाखा-
विशेषे ब्रह्मपुराणे। कर्माण्यप्याभ्युदयिके माङ्गल्यवति शोभने।
जन्मन्यथोपनयने विवाहे पुत्रकस्य च। पितॄन्नान्दीमुखान्नाम
तर्पयेद्विधिपूर्वकम्। आभ्युदयिके दृष्टार्थाभ्युदयसाधने ग्रह-
यागादौ। माङ्गल्यवति कन्याविवाहादौ मङ्गलकर्मबहुल-
त्वात्। शोभने स्वल्पमपारलौकिके देवप्रतिष्ठातुलापुरुषादौ
मत्स्यपुराणसंवादात्। विष्णुपुराणे। कन्यापुत्रविवाहेषु प्र-
वेशे नववेश्मनः। नामकर्मणि बालानां चूडाकर्मादिके तथा।
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने। नान्दीमुखं पितृगणं
पूजयेत्प्रयतो गृही। चूडाकर्मादिनेत्यादिपदेनोपनयनपरि-
ग्रहः। एवं चूडाकरणात्पूर्वं नामकरणएव परं श्राद्धं न नि-
ष्क्रमणान्नप्राशनयोः। आदिशब्दस्य प्रकारार्थत्वात्तत्रापीति
चेत्। नामकर्मोपादानवैयर्थ्यप्रसङ्गात्। अतः "स्वपितृभ्यः
पिता दद्यात्सुतसंस्कारकर्मणि। पिण्डानोद्वाहनात्तेषां तस्या-

चीति । आपद्यात्मनो देशकालाभ्यां विप्लवे समुपस्थि
आमश्राद्धं द्विजैः कार्यं शूद्रेण तु सदैव चीति, उशन
व्याख्याता ॥ अनग्नौ पाकयोग्याग्निविरहे । एवं च "आम
श्राद्धेऽनग्निः सर्वत्रैव मनीषिणः । येनाग्नौकरणं कुर्या
पिण्डांस्तेनैव निर्वपेत्" इत्यत्राप्यनग्निः पाकयोग्याग्निविरहि
नायमर्थोऽतात्पर्यार्थः । पाकेन श्राद्धासम्भवे आमश्राद्धं क
व्यम् । युक्तं चैतत्सर्वशक्तिन्यायेनोपपत्तौ मूलान्तरकल्पना
प्रयोगात् । एवं च काम्यश्राद्धमामान्नेन नैव कर्त्तव्यम् । तद
लघुहारीतः । आपद्यग्नौ द्विजातीनामामश्राद्धं प्रकीर्तितम
अमावास्यादिनियतं मासंसंवत्सरादृते । नियतमवश्यं कर्त्त
तेन काम्यव्यावृत्तिः । तीर्थश्राद्धं ग्रहणश्राद्धं च काम्यमप
मान्नेनैव कर्त्तव्यं पूर्ववाक्ये पृथगुपादानात् । ये तु व्याचक्ष
'अनग्निःश्रौतस्मार्ताग्निरहितः । सदैवामश्राद्धं कुर्यात् । पा
कश्राद्धं तु नाग्निमानश्नीति तन्मतेनानपेक्षितविधिः । मूल
न्तरकल्पनं पाकबाधो मध्यदेशाचारबाधश्च स्यात् । आम
श्राद्धे तु ब्राह्मणहस्तेऽग्नौकरणम् । पुत्रादिजन्मश्राद्धे च
मान्नेन देयम् । आमश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणे क्वचि
पक्वान्ननिषेधात् । लघुहारीतः । एकोद्दिष्टं तु कर्त्तव्यं पाके
नैव सदा स्वयम् । अभावे पाकपात्राणां तदहः समुपोषणम्
पाकेनैवेति अशक्तिविषयम् ।

तद्रास्वयमित्यभिधानाद्पाटवादौ पुत्रदाराऽपि न कारयि-
तव्यं, तदहः समुपोषणमिति श्राद्धकार्ये विधिः प्रायश्चित्तवि-
धिर्वा। उभयथाऽपि तदहः समुपोषणे कृत्स्नैकादश्यां न क-
र्तव्यं तेनैव कृतार्थत्वात्। 'अमावास्यादिनियतं प्रोषिते स-
हचारिणी। पत्नी तत्कारयेन्नित्यमन्येनाप्यृत्विगादिना।"
आदिपदेन विप्रत्वाद्युक्ताष्टकाद्यावश्यककालपरिग्रहः। का-
रयेत्पत्नी एतच्च साग्निविषयम्। "निःक्षिप्याग्निं स्वदारेषु प-
रिकल्प्यर्त्विजं तथा। प्रवसेत्कार्यवान्विप्रो वृथैव न चिरं क्व-
चित्।" इतिपरिशिष्टवचनात्। "एतच्चानुपनीतोऽपि कुर्या-
त्सर्वेषु पर्वसु। श्राद्धं साधारणं नाम सर्वकामफलप्रदम्।
भार्याविरहितोऽप्येतत्प्रवासस्थोऽपि भक्तिमान्। शूद्रोऽप्यम-
न्त्रवत्कुर्यादनेन विधिना नृपः" इतिपार्वणानन्तरमत्स्यपुरा-
णवाक्ये प्रवासपदं निरग्निपरमिति न विरोधः। नित्यं।
"अहरहः क्रियते यत्तु तन्नित्यमिति कीर्तितमिति भविष्यपु-
राणे लिखितम्। अत्र चार्घावाहनपिण्डविश्वेदेवश्राद्धानि
निषिद्धानि। पूर्वदिननियमं श्राद्धदिननियममग्नौकरणं श्रा-
द्धोत्तरकर्म ब्राह्मणभोज्यादि चाचारान्निवर्तयन्ति। ब्राह्मणा-
भावेऽल्पमप्यन्नमासनपूर्वकमुद्धृत्य ब्राह्मणायार्थी जले वा
प्रतिपादयेत्। मनुः। दद्यादहरहःश्राद्धमन्नाद्येनोदकेन वा।
पयोमूलफलैर्वापि पितृभ्यः प्रतिपादयेत्। अन्नाद्यभावे प-

प्रथमं पूज्याः पितरस्तदनन्तरम्। ततो मातामहानां च वि-श्वेदेवास्तथैव चेति मत्स्यपुराणोक्तत्वात्। उत्सवानन्दहेतौ सन्ताने सत्पुत्रोत्पत्ताविति यावत्। आदिपदेन यथ्यन्तरोक्त-मङ्गलपरिग्रहः। मातामहानां पूज्येत्यन्वयः। विश्वेदेवास्तथैव चेति पाठक्रमो नादेयः। श्राद्धत्रयेऽपि विश्वेदेवसम्बन्धो विशे-षोपादानात्। विश्वेदेवविहीनं तु केचिदिच्छन्ति मानवाः। इतिमार्कण्डेयपुराणीयो मातृश्राद्धे देवश्राद्धनिषेधः। शाखा-विशेषे ब्रह्मपुराणे। कर्मण्याभ्युदयिके माङ्गल्यवति शोभने। जन्मन्यथोपनयने विवाहे पुत्रकस्य च। पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम्। आभ्युदयिके दृष्टार्थाभ्युदयसाधने ग्रह-यागादौ। माङ्गल्यवति कन्याविवाहादौ मङ्गलकर्मवत्त्वा-त्वात्। शोभने स्वकृतपारलौकिके देवप्रतिष्ठातुलापुरुषादौ मत्स्यपुराणसंवादात्। विष्णुपुराणे। कन्यापुत्रविवाहेषु प्र-वेशे नववेश्मनः। नामकर्मणि बालानां चूडाकर्मादिके तथा। सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने। नान्दीमुखं पितृगणं पूजयेत्प्रयतो गृही। चूडाकर्मादिनेत्यादिपदेनोपनयनपरि-ग्रहः। एवं चूडाकरणात्पूर्वं नामकरणएव परं निष्क्रमणान्नप्राशनयोः। आदिशब्दस्य प्रकारा चेत्। नामकर्मोपादानवैयर्थ्यप्र पिता दद्यात्सुतसंस्कारकर्मणि। पि

यो मूलफलानि तदभावपकर्षात्। उदकं च सर्वाभावे उक्तं च
भविष्यपुराणे "अशक्तावुदकेन तु" यद्यपि पितृभ्य इति पि-
त्रादिविषयमेव। 'मातामहानामप्येवं श्राद्धं कुर्यादिति
पार्वणप्रकरणोक्तमन्त्रतोऽतिदिश्यते। प्रधानत्वात्। पितरो
यत्र पूज्यन्ते तत्र मातामहा ध्रुव"मिति स्मृतिमञ्जरीलिखि-
तवाक्यात्। "अप्येकं भोजयेद्विप्रं षण्णामप्यन्वहं गृही"ति
श्रीभाकरलिखितपुराणवाक्यात्। कर्पूरसमन्वितं चैव तथाऽ-
न्यच्छ्राद्धषोडशम्। मत्स्याब्दिकं तु शेषेषु पिण्डाः स्युः षडिति
स्मृतिः। इतिपरिशिष्टपठ्यमानवचनाच्च। मातामहादिश्राद्धं
वदन्ति। पिण्डाः स्युः षडिति षट्पुरुषश्राद्धोपलक्षणमिति
व्याचक्षते। अन्ये तु एतानि वाक्यानि राजाद्युपेक्षितत्वेनाऽ-
त्याचारमेव प्रमाणयन्ति। एवमष्टकादिश्राद्धेऽपि मातामह-
हादिश्राद्धं बोद्धव्यम्। आश्वलायनगृह्ये ह्यष्टकान्वये क्रमेणा-
पूपमांसशाकैः श्राद्धं प्रेतपक्षाष्टम्यां शाकेनेति विशेषः। एव-
मेवान्वष्टकास्वपि तत्र मातृश्राद्धं पूर्वमिति भेदः। पित्रादि-
मातामहादिश्राद्धमध्ये मात्रादिश्राद्धमित्येके। सपिण्डीकरणे
तु मातामहादिश्राद्धं नास्ति पात्रचतुष्टयविधानात्। पिण्ड-
त्रयेण सह मेलके इतरानुपयोगात्। पितॄनवाप्ययेत्त्रेत्येव-
कारेण व्यावृत्तेः। आभ्युदयिके च व्यक्तमेव मातामहादि-
श्राद्धम्। "उत्सवानन्दसन्ताने यज्ञोद्वाहादिमङ्गले। मातरः

प्रथमं पूज्याः पितरस्तदनन्तरम्। ततो मातामहानां च वि-श्वेदेवास्तथैव चेति मत्स्यपुराणोक्तत्वात्। उत्सवानन्दहेतौ सन्ताने सत्पुत्रोत्पत्ताविति यावत्। आदिपदेन कर्म्मान्तरोक्त-मङ्गलपरिग्रहः। मातामहानां पूज्येत्यन्वयः। विश्वेदेवास्तथैव चेति पाठक्रमो नादेयः। श्राद्धत्रयेऽपि विश्वेदेवसम्बन्धो विधि-योपादानात्। विश्वेदेवविहीनं तु केचिदिच्छन्ति मानवाः। इति मार्कण्डेयपुराणीयो मातृश्राद्धे देवश्राद्धनिषेधः शाखा-विशेषे ब्रह्मपुराणे। कर्म्मण्यप्याभ्युदयिके माङ्गल्यवति शोभने। जन्मन्यथोपनयने विवाहे पुत्रकस्य च। पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम्। आभ्युदयिके दृष्टार्थाभ्युदयसाधने ग्रह-यागादौ। माङ्गल्यवति कन्याविवाहादौ मङ्गलकर्मसंयुक्त-त्वात्। शोभने सकलपारलौकिके देवप्रतिष्ठातुलापुरुषादौ मत्स्यपुराणसंवादात्। विष्णुपुराणे। कन्यापुत्रविवाहेषु प्र-वेशे नववेश्मनः। नामकर्म्मणि बालानां चूडाकर्म्मादिके तथा। सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने। नान्दीमुखं पितृगणं पूजयेत्प्रयतो गृही। चूडाकर्म्मादिकेत्यादिपदेनोपनयनपरि-ग्रहः। एवं चूडाकरणात्पूर्वं नामकरण एव परं श्राद्धं न नि-ष्क्रमणान्नप्राशनयोः। आदिशब्दस्य प्रकारार्थत्वात्तत्रापीति चेन्न। नामकर्म्मोपादानवैयर्थ्यप्रसङ्गात्। अतः "[illegible] [illegible] दृष्याकुरणत्रावप्यरोपि। पिण्डनिर्वापरहितं कर्त्त-

यो मूलफलानि तृप्तावपकर्षात्। उदकं च सर्वाभावे उक्तं च
भविष्यपुराणे "अशक्तावुदकेन तु" यद्यपि पितृभ्य इति वि
चादिद्विकपरमेव। 'मातामहानामप्येवं श्राद्धं कुर्यादिति
पार्वणप्रकरणोक्तमन्त्रताऽतिदिश्यते। प्रधानत्वात् पितरो
यत्र पूज्यन्ते तत्र मातामहा ध्रुव'मिति स्मृतिमञ्जरीलिखि
तवाक्यात्। "अप्येकं भोजयेद्विप्रं षण्णामप्यन्वहं गृही" इ
प्रभाकरलिखितपुराणवाक्यात्। कर्पूरसमन्वितं चैव तथाऽ
न्यच्छ्राद्धषोडशम्। प्रत्याब्दिकं तु शेषेषु पिण्डाः स्युः षडिति
स्मृतिः। इतिपरिशिष्टपठ्यमानवचनाच्च। मातामहादिश्राद्ध
वदन्ति। पिण्डाः स्युः षडिति षट्पुरुषश्राद्धोपलक्षणमिति
व्याचक्षते। अन्ये तु एतानि वाक्यानि राजाद्युपेक्षितत्वेन ना
दृत्याचारमेव प्रमाणयन्ति। एवमष्टकादिश्राद्धेऽपि मातामह
हादिश्राद्धं बोद्धव्यम्। आग्रहायण्यूर्ध्वमष्टकात्रये क्रमेण
पूपमांसशाकैः श्राद्धं प्रेतपक्षाष्टकायां शाकेनेति विशेषः। एव
मेवान्वष्टकास्वपि तत्र मातृश्राद्धं पूर्वमिति भेदः। पित्रादि
मातामहादिश्राद्धमध्ये मात्रादिश्राद्धमित्येके। सपिण्डीकरणे
तु मातामहादिश्राद्धं नास्ति पात्रचतुष्टयविधानात्। पिण्ड
त्रयेण सह मेलके इतरानुपयोगात्। पितृत्वाश्रयेत्तत्त्वेनैव
कारेण व्यावृत्तिः। आभ्युदयिके च व्यक्तमेव मातामहादि
श्राद्धम्। "उत्सवानन्दसन्ताने यज्ञोद्वाहादिमङ्गले। मातर

त्राश्राद्धे नवान्नश्राद्धे च नाभ्युदयिकश्राद्धविधिः प्रमाणा-
वात्। द्वादशश्राद्धे यात्राश्राद्धस्य भेदेनाभिधानात्। वि-
स्मृतौ च "औदयिकपाकौ चेति" नित्यश्राद्धकाण्डेषु पठित-
त्। आभ्युदयिकस्येति काम्यश्राद्धकाण्डे पाठात्। अतए-
भयत्र पार्वणविधिः। तत्र यात्राश्राद्धं देशान्तरतीर्थया-
पक्रमे गृहमागत्य च घृतद्रव्यकम्। नवान्नश्राद्धं नवान्न-
शनात्प्राक् नवान्नेनेति विशेषः। केचित्त्वाहुः। "इष्टश्राद्धे क्र-
दक्षौ सत्यो नान्दीमुखे वसू। नैमित्तिके कामकालौ काम्ये
धुरिलोचनौ। पुरूरवामाद्रवसौ पार्वणे समुदाहृतौ।"
ति बृहस्पतिवाक्ये इष्टश्राद्धपदेन कर्माङ्गं श्राद्धमेवोच्यते।
तः कर्माङ्गश्राद्धे क्रतुदक्षौ मुख्यौ। कल्पतरुकारस्तु। इष्ट-
ाद्धमिष्टश्राद्धं "श्राद्धप्रतिरुचिश्चे"त्यनेन विहितमित्याह
ज्ञाते कर्माङ्गश्राद्धस्य नान्दीमुखेऽन्तर्भावात्। न [illegible] ा-
य वेदव्यौ। नैमित्तिके कामकालाविति।
पिण्डीकरणपरम्। "एकोद्दिष्टं तु यच्छ्राद्धं
पते" इति वचनादेको[illegible]न्तरे [illegible] देवनिषेध

भावे तु तत्क्रमादि" ति परिशिष्टेऽपि सुतसंस्कारपदं सङ्को
चनीयम्। आ-उद्वाहनादिश्राद्धपर्यन्तमित्यर्थः। तस्याभा
तु तत्क्रमादिति पितृहीनस्य यो नामादिकर्त्ता स तदीया
नरमारभ्याभ्युदयिकं कुर्यात्। विवाहे च स्वयमेव पित्राद्य
भ्युदयिकं कुर्यात्। अनुपनीतस्यापि श्राद्धाधिकारादुपनयं
ऽपि स्वयमेवाभ्युदयिकं कुर्यात्। तत्र। अधिकृतकर्तृ समा
कर्तृ कत्वबाधापत्तेः। एवं चात्र स्वपितृभ्यइत्यादिना जनक
दीनामेव देवतात्वस्य व्यक्तमभिधानात्। नान्दीमुखा श्र
ते एव ब्रह्मपुराणीयपित्रादित्रयपरभूतपुरुषत्रयनान्दीमु
त्वाभिधानं पित्रादित्रिके जीवति शाखान्तरविषयं वेति
कल्पतरुक्ता "सूर्येन्द्वोः कर्मणी ये तु तयोः श्राद्धं न
द्यते" इति परिशिष्टवचनात्सूर्यदर्शनचन्द्रदर्शनयोः श्राद्धं
षिद्धमित्युक्तम्। तदपरे दूषयन्ति—"सूर्यात्पत्तसुतपञ्चस्य
नपरिषिच्यते", रिति पदसामानाधिकरण्यात्परिवेषणनि
त्तयोः कर्मणोः श्राद्धनिषेधो न तु सूर्यदर्शनचन्द्रदर्शनयोरि
अस्माभिस्तु विष्णुपुराणीयवचनान्निषेधो दर्शितएवेति।
विष्णुपुराणे। निषेककाले सोमे च सीमन्तोन्नयने तथा। य
पुंसवने चैव श्राद्धं कर्माङ्गमेव च। शातातपः। नान्दिश्राद्धं तु
तुच्छ्राद्धे कर्म वैदिकमाचरेदिति, पक्ष्यन्तराक्त विशेषविषय
शेषस्तर्त्तव्यः। अन्यथा तत्तद्विशेषविध्यनुपपत्तेरतिप्रसङ्गाच्च

न्धुभिः कृते । व्युत्क्रमादात्मघातादेः । असौ पिता । अत्र ब्राह्मणादिहते इति आदिशब्दः आह्वानर्चपितृपलक्षणपरः । तेनासपिण्डितस्यापि परिग्रहः । एवं चासपिण्डितेऽपि पितरि कनिष्ठेन स्वविवाहार्थं पितामहाद्याभ्युदयिकं कर्त्तव्यम् । तस्याभावे तु तत्क्रमादिति विरोधान्नैवेति चेन्न । तदभावस्य श्राद्धयोग्यत्वोपलक्षणादिति शम् ॥

इति श्रीमहामहोपाध्याय श्रीदत्तविरचिते श्राद्धकल्पे
पितृभक्तौ निर्णयाध्यायो द्वितीयः संपूर्णः ॥

यद्यपि सन्ति जगत्यां बहवः ख्याता निबन्धकर्त्तारः ।
परिमितवचसा निखिलं संशयमेतन्नयेद्विलयम् ॥ १ ॥

॥ अथ सपिण्डीकरणश्राद्धप्रयोगः ॥

द्वादशमासिकानामूनषाण्मासिकोनवार्षिकयोश्चायमेव प्रयोगः परं तत्र प्रेतशब्देनोद्देशः । स्वधास्थाने नम इति । उपतिष्ठतामिति वा वक्तव्यम् । नमो व इत्यादि मन्त्रो न पठनीयः । स्वस्तीति सङ्कटोच्चारणवर्जमुच्चार्य विसर्जनम् । अभिरम्यतामिति मन्त्रो न पठनीयः । ॐ अद्यामुकगोत्र पितरमुकप्रेत इदं ते पाद्यार्घं मया दीयते तवोपतिष्ठतामिति पाद्यार्घदानवाक्यम् । एवमेव समस्तश्राद्धवाक्यानि । मासोदकुम्भदानमप्यनेनैव वाक्येनासनदानपूर्वकम् । एकादशाहश्राद्ध-

कोद्दिष्टानि षोडशेति । "एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया
अपि" इति च घटते। इदं चाभ्युदयिकं यस्य सपिण्डीकरणं
कर्त्तुमस्ति तत्तेन सह न कर्त्तव्यं किन्तु सपिण्डीकरणे कृत
एव। सपिण्डीकरणे कृतेऽप्याभ्युदयिकाङ्गकं काम्यं कर्ममहा-
दानादिरूपं न कर्त्तव्यं प्रथमवर्षे । यदाह लघुहारीत
"भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा। सह पि-
ण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः। तथैव काम्यं यत्कर्म व
त्सरात्प्रथमादृते" इति। केचिद्व्याचक्षते । यस्य सपिण्डीकर
न कृतं वर्त्तते तस्यैव आभ्युदयिकं न कर्त्तव्यम्। आभ्युदयि
कान्तरं च सपिण्डीकरणेऽकृतेऽपि कर्त्तव्यमेवेति । अस्मिं
पक्षे सपिण्डीकरणानधिकारिणाऽप्याभ्युदयिकान्तर्भूतस्य स
पिण्डीकरणे अकृते आभ्युदयिकं न कर्त्तव्यम्। एषा च व्य
वस्था सङ्कोचात्समानकर्तृकत्वावगतेश्च दुष्टा। अतो यः क
श्चित्सपिण्डीकरणाधिकारी यस्य कस्याभ्युदयिकं सपिण्डी
करणं कृत्वैव कुर्यादितिवाक्यार्थः। एवं च सपिण्डीकरणा-
नधिकारिणा कनिष्ठेनासपिण्डितपितृपरभूतपुरुषत्रयश्राद्ध
पुत्रजन्मादौ कर्त्तव्यमेव। न च "स्वपितृभ्यो दद्यादिति वि-
रोधः" पितरि आद्यायोग्ये पितामहादीनामेव स्वपितृत्वात्।
तदुक्तम्। "ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते । व्युत्क्र-
माच्च मृते देयं येभ्य एव ददात्यसौ।" सङ्गवर्जिते, भ्रातिव-

मध्याह्ने ब्राह्मणानाहूय स्वागतं पृष्ट्वा उपविश्यामन्त्र्य नियमाञ्छ्रावयित्वा ब्राह्मणपादौ प्रक्षाल्य पादार्घं दद्यात् । केचित्प्रेतपादार्घशेषजलं पितामहादिपादार्घपात्रेषु "ये समाना" इति मन्त्रद्वयेन प्रयोजयन्ति विष्णुदर्शनात् । आचमनीयं दत्त्वा स्वयमेवाचम्याहूतस्थानं गत्वाऽन्नाभिप्रायेण सिद्धमिति वाचिकां पृष्ट्वा । ब्राह्मणानुपवेश्य तेषां पादयोर्दक्षिणाग्रं कुशपत्रत्रयं दत्त्वा प्रत्यासनसमीपं तिलतैलेन दीपान्दत्त्वा रक्षोघ्नान्संनिधाप्य श्राद्धवस्तूनपसार्य्य श्राद्धदेयद्रव्याणि सिञ्चेत् । अथ प्राङ्मुख उपविष्टः कुशजलतिलान्दक्षिणहस्तेनादाय । अद्य पितुः सपिण्डीकरणश्राद्धमहं करिष्ये । इति वाक्यं कृत्वा कुरुष्व इत्यभ्यनुज्ञातो गायत्रीं देवताभ्यः इति च जप्त्वा । आसनाद्यन्नसङ्कल्पपर्यन्तं दैवक्रियाकाण्डं निर्वर्त्य । आसनादि दत्त्वा पितृनावाह्य तिलान्विकीर्यायन्तु न इति जप्त्वाऽर्घपात्रचतुष्टयं सपवित्रं जलतिलगन्धपुष्पैः प्रपूर्य्यार्घं दत्त्वा प्रेतपात्रस्थजलेन पितामहादिषु पात्रेषु पित्र्यशिष्टजलानि सिञ्चेत् । "ॐ ये समानाः समनसः पितरो यमराज्ये । तेषांल्लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् ॥ १ ॥ ये समानाः समनसो जीवा जीवेषु मामकाः ॥ तेषां श्रीर्मयि कल्पतामस्मिंल्लोके शतं समाः ॥ २ ॥ इति मन्त्रद्वयेन । ततः पात्राणि न्युब्जीकृत्य गन्धादि दत्त्वा ।

मपीतरप्रेतश्राद्धवत्कर्त्तव्यम् । विशेषस्तु अर्घात्प्राक् छत्रं ब्राह्मणाय प्रेतदिनमुद्दिश्य दातव्यम् । सुखस्पर्शे पादुके प्रेतदुर्गसन्तरणकामो दद्यात् । एवं राज्ञो मातृपित्रोस्तु श्राद्धे गन्धादिदानानन्तरं प्रेतमुद्दिश्य तदुपयुक्तशय्यासनालङ्कारवाहनायुधादिकं श्राद्धभोक्त्रे दद्यात् । श्राद्धानन्तरं गोभूहिरण्यश्रेष्ठरत्नदासदास्यादिकं प्रकृष्टधनं प्रेतमुद्दिश्य ब्राह्मणेभ्यो दद्यात् । श्रोत्रियान्त्सोन्यञ्च सप्त नव दश वा तथा ज्ञातिबन्धुदरिद्रान्सखींश्च पणकाकिणींफलमूलात्मिकामपि तेभ्यो दक्षिणां दद्यात् । सपिण्डीकरणे तु प्रथमं विश्वेदेवास्ततः प्रेतः प्रेतपित्रादिकमिति क्रमः । प्रेतपित्रादौ जीवति प्रेतपित्रादित्रिकपरभूतपुरुषान्तरेण त्रिकं पूरणीयम् । मातृसपिण्डीकरणं मृते पितरि तदादित्रयेण । जीवति पितरि पितामह्यादित्रिकेण । तत्त्रिके च जीवति तत्परित्यज्य परभूतस्त्रिया त्रिकं पूरणीयम् । पुत्रिकापुत्रेण मातामहादित्रिकेण सह मातृसपिण्डनं कर्त्तव्यमिति विशेषः । वधूसपिण्डनं प्राग्वादित्रिकेण । पूर्वपूर्वजीवने उत्तरोत्तरान्तर्भावेणैव त्रिकं पूरणीयम् ॥

॥ अथ प्रयोग आरभ्यते ॥

पूर्वदिने नियमं कृत्वा श्राद्धदिने प्रातरादिकृत्यं च कृत्वा

त्यादिनाऽऽशिषः सम्प्रार्थ्य पिण्डेषु सूत्रादि दत्त्वा प्रेतपिण्डे गन्धादि दत्त्वा सुवर्णरजतकुशैः प्रेतपिण्डं त्रिधा विभज्य पितामहादित्रये योजयेत् । ये समाना इति पूर्वोक्तमन्त्रद्वयेन । ततः पितामहादिपिण्डत्रयं प्रेतपिण्डभागेन समं वर्त्तुलं कृत्वा गन्धादिभिरभ्यर्च्य । ब्राह्मणानाचमय्य तत्करेषु अक्षपुष्पाक्षतानि दत्त्वा पितृगोत्राद्युच्चार्य दत्तमन्नादिकमुपतिष्ठतामिति विप्रकरेऽक्षय्योदकं दत्त्वा पितामहादिविप्रकरे तत्तन्नामगोत्राभ्यां दत्तमन्नादिकमक्षय्योदकमस्त्विति प्रत्येकं दत्त्वा तत आशिषः प्रतिगृह्य पिण्डोपरि सपवित्रकुशानास्तीर्य स्वधां वाचयित्वा ऊर्ज्जमित्यादिना पिण्डान्परिषिञ्च्याघ्रायोत्थापयेत् । दर्भमुल्मुकं च वह्नौ निःक्षिप्यार्घपात्राण्युत्तानीकृत्य दक्षिणां दद्यात् । ततो विश्वेदेवाः प्रीयन्ताम् । इति द्वे वाचयित्वा ब्राह्मणान्विसृज्य । आमावाजस्येत्यादिनाऽनुव्रज्योदकधारया प्रदक्षिणीकृत्य गृहं प्रविश्य श्राद्धोत्तरकर्म समापयेत् । इति सपिण्डीकरणश्राद्धप्रयोगः षड्विमः समाप्तः ॥

॥ अथ नित्यश्राद्धप्रयोगः ॥

भविष्यपुराणे । अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्त्तितम् ॥ वैश्वदेवविहीनं तदशक्तावुदकेन तु । वैश्वदेववि-

नीवारचूर्णादिना मण्डलानि कृत्वा । आकृतिद्वयं कृत्वा कृतशेषं पितामहादिपात्रत्रये दत्वा । अन्नव्यञ्जनानि परिविष्य मधुनाऽभिघार्य "मधु वाता" इति त्र्यृचेनाभिमन्त्र्य पात्रमालभ्य पात्रस्थेऽन्ने द्विजाङ्गुष्ठं संयोज्य तिलान्विकीर्य पूर्वमन्नं सङ्कल्प्याहीनमित्यादि पठित्वाऽऽपोशानं दत्वा गायत्र्यादि जप्त्वाऽनुज्ञातोऽन्नं विकीर्याचम्य हरिं स्मृत्वा ब्राह्मणेभ्यः प्रत्येकं जलगण्डूषं दत्वा पूर्ववद्गायत्रीं मधुवाता इति त्र्यृचं मधु मधु मध्विति जप्त्वा प्रेतविप्रं स्वदितं इति पृष्ट्वा इतरान्तृप्ताःस्थ इति, यथाऽर्हं तैरुक्तैः शेषमन्नमनुज्ञाप्य पिण्डानन्नं करिष्ये, इति पृष्ट्वा कुरुष्व, इत्युक्तः । एकं प्रेतपिण्डार्थमपरं पितामहादिपिण्डार्थं स्थानं निर्माय उभयत्र रेखाकरणं कृत्वा तदुपर्युल्मुकं भ्रामयित्वा तद्दक्षिणतोऽङ्गारं निधाय रेखोपरि छिन्नमूलकुशानास्तीर्य तदुपरि प्रेताय पितामहादिभ्यश्चावनेजनं दत्वाऽन्नविशेषेण चतुरः पिण्डान्निर्माय प्रेताय सुवर्तुलं पिण्डं कृत्वा पितामहादिभ्योऽपि पिण्डान्दत्वा दर्भमूले करं प्रोञ्छ्याचम्य हरिं स्मृत्वा । अत्र पितर इत्यादि पठित्वोदङ्मुखीभूय श्वासं मनाक् नियम्य पुनः पराऽऽवृत्यामीमदन्तेति जप्त्वा पिण्डान्प्रत्यवनेज्य नीवीं विस्रस्य नमो व इत्यादिना ऋतुषट्कल्पनया पितामहादीन्नमस्कृत्य नमो व इत्यादिना केवलनमस्कृत्य वा गृहान्न इ-

गोत्रेत्यादि इदमन्नं सजलं तुभ्यं स्वधा । इति षड्भ्यः प्रत्येकमुत्सृजेत् । यथाशक्ति पवित्राणि जपेत् । ततो यथाशक्तिदक्षिणां दद्यात् । तदन्नं ब्राह्मणाय प्रतिपादयेत् । ब्राह्मणोपवेशनपक्षे त्वागतश्राद्धविधिरिति नित्यश्राद्धप्रयोगः समाप्तः ॥ आमश्राद्धे सुवर्णे च नान्यपोशानभोजनम् ॥ तदङ्गानि निवर्त्तन्ते श्राद्धमिहिरा जायते ॥ १ ॥ इत्यामसुवर्णश्राद्धविषयकं पद्यम् ॥ आसनं पिण्डदानं च पुनः प्रत्यवनेजनम् । अर्घ्यं दक्षिणा चान्नं दद्यात्तीर्थेष्वयं विधिः ॥ इति सङ्क्षिप्ततीर्थश्राद्धम् । अधिककालेऽधिकश्रद्धायामुत्पत्तौ पूर्वोक्तपार्वणविधिना कर्त्तव्यं परन्तु एतद्वर्ज्यम् । अर्घमावाहनं चैव द्विजाङ्गुष्ठनिवेशनम् ॥ तृप्तिप्रश्नं च विकिरं तीर्थश्राद्धे विवर्जयेत् ॥ के के पितरस्तीर्थे पिण्डोदकार्हाः । पितृमातृत्रयं चादौ सपत्नजननी ततः । मातामहाः सपत्नीका आत्मपत्न्यस्ततः परम् ॥ १ ॥ सुतभ्रातृपितृव्याश्च मातुलाश्च सपत्निकाः । मातृष्वसा पितृष्वसा श्वशुरो गुरुरिक्थदौ ॥ २ ॥ एते स्युः पितरस्तीर्थे तर्पणे च महालये ॥ एतेभ्यः पितृभ्यः पिण्डान्दत्वा तद्दक्षिणतः कुशानास्तीर्य तिलोदकेन पितॄनावाहयेत् । ऊनविंशतिद्वासमानपिण्डस्थानेऽवनेज्य गयाश्राद्धे लिखितपितृषोडशीरीत्या पिण्डान्दत्वा सम्पूज्य केचन मातृषोडशीमपि कुर्वन्ति तन्मतं न्याय्यम् । तद्यथा॥ पितुर्मातुश्च

हीनं विश्वेदेवश्राद्धविहीनम् । मनुशङ्खशातातपाः । दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वा । पयोमूलफलैर्वाऽपि पितृभ्यः प्रीतिमावहन् । छन्दोगपरिशिष्टे । अप्येकमाशयेद्विप्रं पितृयज्ञार्थसिद्धये । अभ्युद्धृत्य यथाशक्ति किञ्चिदन्नं यथाविधि । पितृभ्योऽथ मनुष्येभ्यो दद्यादहरहर्द्विजः । मत्स्यपुराणे । नित्यं तावत्प्रवक्ष्यामि अर्घावाहनवर्जितम् । हारीतः । नित्यश्राद्धमदैवं स्यादर्घपिण्डविवर्जितम् । ब्रह्मचर्यादिनिर्वृत्तिराचारतः । ओमद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणां तथाऽमुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणां सपत्नीकानां पितृयज्ञसिद्धये नित्यश्राद्धमहं करिष्ये । इति वाक्यं कृत्वा । गायत्रीं देवताभ्य इति च जप्त्वा । अपवित्र इति मन्त्रेण पुण्डरीकाक्षस्मरणेन च श्राद्धद्रव्याणि सिक्त्वा । ओमद्यामुकगोत्र पितरमुकशर्मन्निदमासनं तुभ्यं स्वधा । इति प्राचीनावीती पातितवामजानुः पितृतीर्थेन जलतिलसमेतद्विगुणभुग्नकुशत्रयेण पित्रे आसनं दद्यात् । एवमेव पितामहादिपञ्चभ्यः । ततो "अपहता" इत्यादिना तिलान्विकीर्य । ओमद्येत्यादिपूर्ववद्गन्धपुष्पधूपदीपताम्बूलवस्त्राणि तुभ्यं स्वधेति यथासम्भवं गन्धादि दद्यात् । ततः पात्रमालभ्य पृथिवी ते पात्रमित्यादि जप्त्वा इदं विष्णुरित्यादिनाङ्गुष्ठमन्ने संयोज्य । ओमद्यामुक-

रस्य कारणी यावत्पुत्रश्च बालकः ॥ तस्य० ॥ १६ ॥ गात्रभङ्गा भवेन्माता मृत्युरेव न संशयः । तस्य निष्क्रमणार्थाय मातृपिण्डं ददाम्यहम् ॥ १७ ॥ यस्याः पुत्रो गयां गत्वा श्राद्धं करोति भक्तितः । तस्य पुत्रस्य पौत्रस्य माता चाशीः प्रयच्छति ॥ १८ ॥

॥ इति मातृषोडशी समाप्ता ॥

भार्याया भगिन्या दुहितुस्तथा ॥ पितृष्वसुर्मातृष्वसुः सप्त गोत्राः प्रकीर्त्तिताः ॥ १ ॥ चतुर्विंशतिविंशस्य षोडश द्वादशैव च ॥ रुद्रद्विरवसवश्चैव कुलान्येकोत्तरं शतम् ॥ २ ॥ अथ मातृषोडशी लिख्यते ॥ आगर्भज्ञानपर्यन्तं पालितोयत्त्वयाप्यहम् ॥ आवाहयामि ता मातृदर्भपृष्ठे तिलोदकैः ॥ १ ॥ गर्भोद्गमने दुःखं विषमे भूमिवर्त्मनि ॥ तस्य निष्क्रमणार्थाय मातृपिण्डंददाम्यहम् ॥ २ ॥ मासि मासि कृतं कष्टं वेदनाप्रसवेषु च ॥ तस्य० ॥ ३ ॥ सम्पूर्णे दशमे मासि चात्यन्तं मातृपीडनम् ॥ तस्य० ॥ ४ ॥ पद्भ्यां प्रजायते पुत्रो जनन्याः परिवेदनम् ॥ तस्य० ॥ ५ ॥ शैथिल्ये प्रसवे प्राप्ते माता विन्दति दुष्कृतम् ॥ तस्य० ॥ ६ ॥ पिबेच्च कटुद्रव्याणि क्वाथानि विविधानि च ॥ तस्य० ॥ ७ ॥ अग्निना शोषयेद्देहं त्रिरात्रोपोषणेन च ॥ तस्य० ॥ ८ ॥ रात्रौ मूत्रपुरीषाभ्यां भिद्यन्ते मातृकर्पटाः ॥ तस्य० ॥ ९ ॥ दिवा रात्रौ यदा माता तदाऽतिनिर्भरस्तनम् ॥ तस्य० ॥ १० ॥ माघे मासि निदाघे च शिशिरेऽत्यन्तदुःखिता ॥ तस्य० ॥ ११ ॥ क्षुधया विह्वले पुत्रं ग्रासं माता प्रयच्छति ॥ तस्य० ॥ १२ ॥ पुत्रो व्याधिसमायुक्तो माता हाऽऽक्रन्दकारिणी ॥ तस्य० ॥ १३ ॥ यमद्वारे महाघोरे पथि माता च शोचति ॥ तस्य० ॥ १४ ॥ पिण्डैः षोडशभिर्विद्वान्यः पुत्रः श्राद्धमाचरेत् ॥ तस्य० ॥ १५ ॥ अल्पाहा-

अथ वाचस्पतिमिश्रकृता ।

# गयाश्राद्धपद्धतिरारभ्यते ।

तत्र कस्मिंश्चिद्दिने एकभक्तादिकं विधाय तदुत्तरदिने अधिकारिविशेषणत्वेन प्रातःस्नानमुपवासं च विधाय तदुत्तरदिने चन्द्रतारानुकूले व्याहनिषिद्धमन्दादिव्यतिरिक्ते काले देवार्चनादि कृत्वा यथेष्टं यथाभिष्टदेवतां च सम्पूज्य कुशत्रयतिलजलान्यादाय । ओमद्य गयातीर्थयात्राङ्गभूतं पार्वणश्राद्धमहं करिष्ये । इति सङ्कल्प्य प्रभूतघृतेन श्राद्धं निर्वर्त्य ब्राह्मणत्रयं सम्पूज्य हिरण्यादिना तान्सन्तोष्य । ओमद्य प्रतिपदाश्वमेधयज्ञफलसमफलप्राप्तिकामो गयायात्रामहं करिष्ये । इति सङ्कल्प्य ततो मुद्राकङ्कणकषायपरिधानरूपं छत्रोपानद्दण्डधारणरूपं च कार्पटीवेषं कृत्वा ग्रामं वासावच्छिन्नं प्रदक्षिणं परिवृत्य क्रोशाभ्यन्तरस्थं ग्रामान्तरं गत्वा श्राद्धघृतेन पारणं कुर्यात् । ततो दिनान्तरे प्रातः शुचिवस्त्रयुगेन कृतस्नानादिराचान्तः कार्पटी वेषं गृहीत्वा पूर्वाह्णे तीर्थाभिमुखं गच्छेत् । तीर्थेऽपि तत्त्वे चाह्निकमनु- [illegible] पं विभृयात् ॥

दानार्थमागतोऽस्मि गयामिमाम् ॥ ते सर्वे तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीम् । इति पठित्वा पितॄन्ध्यात्वा। सव्यं कृत्वाऽऽचम्य सन्ध्यावन्दनवत्पूरककुम्भकरेचकान्प्राणायामान्कृत्वा पुण्डरीकाक्षस्मरणेन श्राद्धीयद्रव्याणि कुशोदकेन प्रोक्ष्य। ॐ अद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणाममुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकदेवीनाममुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणाममुकगोत्राणां मातामहीप्रमातामहीवृद्धप्रमातामहीनाममुकामुकदेवीनां प्रेतत्वविमुक्तिकामः प्रेतशिलायां श्राद्धमहं करिष्ये। इतिसङ्कल्प्य षोडशदैवतं श्राद्धं पार्वणेतिकर्त्तव्यताकं कुर्यात् । तच गायत्रीदैवताभ्य इति जात्वा देवचतुष्कासनोत्सर्गः॥ अपसव्येन पित्रादित्रिकमात्रादित्रिकमातामहादित्रिकमातामह्यादित्रिकासनोत्सर्गः। (१) ॥ सव्यम् । विश्वेदेवास आगतेत्यने-

(१) हेमाद्रिमते तु । मातामह्यादित्रयं शेषं पूर्ववत् । अथ-शर्मादिमते तु प्रकृतमेव पार्थक्यं किन्तु सपत्नीकत्वेनादि पक्षामपि पुरुषाणां देवतात्वमिति । मस्मदायमते तु यथाम्युदयाणामिह देवतात्वं न तु स्त्रीणामपि, न च सपत्नीनामपि । उभयमप्यसत् । अष्टकासु च हवौ च गयायां तु मघेऽहनि । मातुः श्राद्धं पृथक्कुर्यादन्यत्र पतिना सह । इति वायुपुराणविरोधात् स्त्रीणां मात्रादित्रिकाणां पृथग्देवतात्वं सिद्धमिति सुधेयम् ।

॥ अथ गयाश्राद्धविधिः ॥

(१) ओमद्याश्वमेध सहस्रजन्यफलविलक्षणफलप्राप्तिकामः फल्गुतीर्थे स्नानमहं करिष्ये । इति सङ्कल्प्य । ॐ फल्गुतीर्थे पुण्यजले करोमि स्नानमादृतः ॥ पितॄणां विष्णुलोकाय भुक्तिमुक्तिप्रसिद्धये । इति पठित्वा यथाविधि स्नायात् । अकृतसन्ध्यावन्दने सन्ध्यावन्दनं कर्त्तव्यम् । तर्पणं तु । अद्यामुकगोत्रोऽस्मत्पिताऽमुकशर्मा तृप्यतामिदं तिलोदकं तस्मै स्वधा । पितरं प्रीणयामीति पितुः । एवं राजतर्पणपर्यन्तेषु सर्वत्र तर्पणेष्वमुकं प्रीणयामीति प्रयोज्यम्। ततो देवार्चनादि कृत्वा ओमद्य तीर्थप्राप्तिनिमित्तकपार्वणश्राद्धं कुर्यात् । तदसम्भवे पिण्डदानमात्रमपि तीर्थप्राप्तिनिमित्तकं तद्दीत्यैव कर्त्तव्यम् ॥ ततस्तद्दिन एव फल्गुपश्चिमार्द्धक्रमां गयोत्तरस्थां प्रेतशिलां गत्वा तत्कर्म कर्त्तव्यम्। तद्यथा प्रेतशिलायां कृतभूपञ्चसंस्कारायामाचान्त उपविश्य कृतापसव्यो दक्षिणाभिमुखो भूत्वा । ॐ कव्यवाडनलः सोमो यमश्चैवार्यमा तथा । अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः ॥ आगच्छन्तु महाभागा युष्माभी रक्षितास्त्विह ॥ मदीयाः पितरो ये च कुले जाताः सनाभयः ॥ तेषां पिण्डप्र-

(१) फल्गुतीर्थे यथोपकल्पितमाद्यपादपूरणं नारिकेलरजतमुद्रिकायुतं कार्यमिति तत्रत्याचारो बोध्यः ॥

दानार्थमागतोऽस्मि गयामिमाम् ॥ ते सर्वे तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीम् । इति पठित्वा पितॄन्ध्यात्वा । सव्यं कृत्वाऽऽचम्य सन्ध्यावन्दनवत्पूरककुम्भकरेचकात्प्राणायामान्कृत्वा पुण्डरीकाक्षस्मरणेन श्राद्धीयद्रव्याणि कुशोदकेन प्रोक्ष्य। ॐमद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणाममुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकदेवीनाममुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणाममुकगोत्राणां मातामहीप्रमातामहीवृद्धप्रमातामहीनाममुकामुकदेवीनां प्रेतत्वविमुक्तिकामः प्रेतशिलायां श्राद्धमहं करिष्ये। इतिसङ्कल्प्य षोडशदैवतं श्राद्धं पार्वणेतिकर्त्तव्यताकं कुर्यात् । तत्र गायत्रीदेवताभ्य इति जप्त्वा देवचतुष्कासनोत्सर्गः॥ अपसव्येन पित्रादित्रिकमात्रादित्रिकमातामहादित्रिकमातामह्यादित्रिकासनोत्सर्गः। (१) ॥ सव्यम् । विश्वेदेवासऽआगतेत्यने-

(१) वैतादृद्मी तु । मातामह्यादिवर्ज्यं शेषं पूर्ववत् । अपमार्गादिमी तु महालयेव पार्वणं किन्तु सपत्नीकत्वेनापि पत्नामपि पुरुषाणां दैवतात्वमिति । मन्वादायमी तु पत्न्यास्पुरुषाणामिव दैवतात्वं न तु स्त्रीणामपि, न च सपत्नीकानामपि । तदुक्तमन्यत्र । यष्टकासु हरौ च नवाहो तु षडेऽहनि । मातुः श्राद्धं पृथक्कुर्यादन्यत्र पतिना सह । इति वायुपुराणविरोधात् स्त्रीणां मात्रादित्रिकाणां पृथग्दैवतात्वं विरमिति बृद्धेरिदम् ।

नावाहनम्। यवोऽसीति यवविकरणम्। ओं विश्वेदेवाः शृ-
णुतेममिति। ओं आगच्छन्तु महाभागा इति पाठः। अपसव्यम्।
ओं उशन्तस्त्वेत्यावाहनम्। ओमपहता इति तिलविकरणम्। ओं-
मायन्तु न इति जपः। सव्येन देवार्घकरणम्। अपसव्येन
पित्राद्यर्घकरणम्। तथा तत्तदुत्सर्गः। सव्येन देवार्घपात्राणां
देवासनदक्षिणपार्श्वे विश्वेभ्यो देवेभ्यः स्थानमसीति उत्तान-
स्थापनम्। अपसव्येन पितृभ्यः स्थानमसीति पित्राद्यर्घपात्र-
न्युब्जीकरणम्। मातृभ्यः स्थानमसीति मात्राद्यर्घपात्रन्युब्जी-
करणम्। मातामहादिभ्यः स्थानमसीति मातामहाद्यर्घपा-
त्रन्युब्जीकरणम्। सव्येन देवे गन्धाद्युत्सर्गः। अपसव्येन पि-
त्रादित्रिकादिपात्रेषु गन्धाद्युत्सर्गः॥ सव्यं देवे मण्डलकर-
णम्। सव्यमग्नौकरणम्। अपसव्यं भुक्तामिति दानम्। सव्यं
देवपात्रेषु कृतशेषदानम्। अपसव्यं पित्रादिपात्रेष्वपि कृत-
शेषदानम्। पिण्डार्थतद्धारणम्। सव्यं देवपात्रेषु परिवेष-
णम्। अपसव्यं पित्रादिपात्रेषु परिवेषणम्। सव्यं देवे मधु-
दानम्। अपसव्यं पित्रादिपात्रेषु मधुदानम्। सव्यं देवे म-
धुमत्याऽभिमन्त्रणम्। अपसव्यं पित्राभिमन्त्रणम्। सव्यं
पात्रालम्भनपूर्वकदेवान्नोत्सर्गः। अपसव्यं तथा पित्राद्यन्नो-
त्सर्गः। गायत्रीमधुमतीजपः। अन्नहीनपाठः। कुशोपवेशनं
मधुमध्विति त्रिर्जपः। कृणुष्व पाज इति तिलविकरणम्।

जपः। अपसव्यं दीपनिर्वापणम्। सव्यं हस्तपादप्रक्षालनम्। प्रमादादिनिपाठः। श्राद्धीयद्रव्यप्रतिपत्तयः। एवं पार्वणं विधाय। तद्वेदीदक्षिणउपविश्य कृतापसव्यो दक्षिणाग्रं कुशत्रयं धृत्वा। ओंकव्यवाडोऽनलः सोमो यमश्चैवार्यमा तथा। अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः। आगच्छन्तु महाभागा युष्माभी रक्षितास्त्विह। मदीयाः पितरो ये च कुले जाताः सनाभयः। तेषां पिण्डप्रदानार्थमागतोऽस्मि गयामिमाम्। ते सर्वे तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीम्। इति मन्त्रं पठित्वा सकृत्तिलोदकाञ्जलिरूपमावाहनं कृत्वा एतानि पाद्यादीनि। ओंपित्रादिभ्यो नमः। इति क्रमेण पञ्चोपचारेण पित्रादीन्सम्पूज्य। ओंआब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः। तृप्यन्तु पितरः सर्वे मातृमातामहादयः। अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम्। आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम्। इति पूर्ववदञ्जलिदानरूपमिश्रितदेवपित्राद्यावाहनं कृत्वा। ओंमद्यामुकगोत्र पितरमुकशर्मन्नेष ते पिण्डः स्वधेति तिलजलमधुदधिघृतमिश्रं पायसादिकृतं पिण्डं पित्रे। एवं पितामहादिभ्य एकादशभ्योऽपि यथादक्षिणं दद्यात्। ततस्तद्दक्षिणत उपविश्य समूलान्दक्षिणाग्रान्कुशानास्तीर्य ओंकव्यवाडित्यादिशाश्वतीमित्यन्तं मन्त्रं पूर्ववत्पठित्वा सकृत्तिलोदकाञ्जलिदानरूपमावाहनं

पेतरे। मगताने सर्वे तृप्तिमायान्तु पिण्डेनानेन सर्वदा ॥१६॥ ओँ येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः । तेषां पिण्डो मयादत्तो ह्यक्षय्यमुपतिष्ठताम् ॥ १७ ॥ ओँ पितृवंशे मृता ये च मातृवंशे च ये मृताः। गुरुश्वशुरबन्धूनां ये चान्ये बान्धवादयः ॥ १८ ॥ ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः । क्रियालोपगता ये च जात्यन्धाः पङ्गवस्तथा ॥ १९ ॥ विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम । तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥ २० ॥ आब्रह्मणो ये पितृवंशजाता मातुस्तथा वंशभवा मदीयाः। कुलद्वये ये मम दासभूता भृत्यास्तथैवाश्रितसेवकाश्च ॥ २१ ॥ मित्राणि सख्यः पशवश्च वृक्षा दृष्टा ह्यदृष्टाश्च कृतोपकाराः।जन्मान्तरे ये मम सङ्गताश्च तेभ्यः स्वधा पिण्डमहं ददामि ॥२२॥ इति पठित्वा ओँकारपूर्वकमपसव्येन कथितप्रमाणकानूनविंशतिपिण्डान्प्रत्येकं दद्यादिति ॥ स्त्रीपोड्श्यां तु। अस्मिन्कुले मृता ये च त्यावाहनमन्त्रादारभ्य मित्राणि सख्य इतिपर्यन्तं सम्यक्स्त्रीलिङ्गमूहनीयम्। यथा ओँ अस्मत्कुले मृता याश्च गतिर्यासां न विद्यते ॥ तासामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्।ये इत्यत्र या इतिविशेषः। येषामित्यत्र यासामिति विशेषः।तेभ्य इत्यत्र ताभ्य इतिविशेषः । घातिन इत्यत्र घातिन्यःइति वि- : एवं सर्वत्रोह्यम् । अन्यत्सर्वमुक्तपुंषोड्शीवत् । ततः

षट्पुरुषाणामेव प्रेतत्वविमुक्तिकामनया पिण्डदानं कुर्वन्ति
तत्र च वेदिद्वयकरणं तदङ्गारभ्रामणछिन्नमूलधारणावनेज-
नस्थानधारणनीवीविस्रंसनच्छत्रदानगन्धादिनान्येव स्वसूत्रो-
क्तानि वाजसनेयिभिः कार्याणि । एतदन्यतमकरणानन्तरं
पर्वतादवरुह्य पृथिव्यां प्रभासाद्रिसङ्गतायां महानद्यां राम-
तीर्थत्वेन प्रसिद्धे रामह्रदे । ओमद्य साग्रशतजन्मान्तरयत्कृत-
दुष्कृतविलयकामोऽस्मिन्रामतीर्थे स्नानमहं करिष्ये। इति स-
ङ्कल्प्य स्नानतर्पणे कृत्वा तत्र स्नानीयमन्त्रपाठानन्तरम् । ॐ
जन्मान्तरशतं साग्रं यत्कृतं दुष्कृतं मया ॥ तत्सर्वं विलयं यातु
रामतीर्थाभिषेचनात् । इति पौराणिकमन्त्रं पठित्वा मज्जेत् ।
ओमद्य विष्णुलोकगमनकामो रामतीर्थे श्राद्धं पिण्डदानं
वाऽहं करिष्ये । इतिसङ्कल्प्य श्राद्धं पिण्डदानं वा कुर्यात् ।
इदं पार्वणं पिण्डदानं च स्वसूत्रानुसारेणैव कर्त्तव्यम् । ग-
योक्तपितृगतफलकपितृकर्मत्वाभावादिति । ॐ अद्य पित्रा-
दिप्रेतत्वविमुक्तिपूर्वकपितृत्वप्राप्तिकामो रामतीर्थे पितॄणां
पिण्डदानमहं करिष्ये । इति सङ्कल्प्य प्रेतशिलोक्तरीत्या पि-
त्रादि द्वादशपिण्डानथवा षोडश पिण्डान्दद्यात् । विष्णु-
लोकफलकस्यास्य चोभयस्यापि करणसामर्थ्येऽन्यतरमेव क-
र्त्तव्यमिदानीमिति । ततः । ॐ राम राम महाबाहो देवाना-
मभयंकर । त्वां नमस्येऽत्र देवेश मम नश्यतु पातकम् । इति

सर्वेषु पिण्डेषु तिलजलपूर्णपात्रेण प्रदक्षिणं वारत्रयं परिषेचनं कर्त्तव्यम्। तत्र मन्त्रः। ओं ये च वो ये चास्मास्वन्याश्च वो याश्चास्माश्चाश्चासंस्ते चावाहन्तां ताश्चावाहतां वः प्यन्तु भवन्तस्तृप्यन्तु भवत्यस्तृप्यत गोत्रान्नुत्रानभितर्पयन्तोरापो मधुमतीरिमाः स्वधा पितृभ्यो मातृभ्योऽमृतं दुहाना आपो देवीरुभयांस्तर्पयन्तु तृप्यत तृप्यत। ततः प्रणिपत्य। ओं पित्रादयः क्षमध्वम्। इति तान्विसृजेत्। ततः सव्येनाचम्य। ओं साक्षिणः सन्तु मे देवा ब्रह्मेशानादयस्तथा। मया गयां समासाद्य पितॄणां निष्कृतिः कृता॥ आगतोऽस्मि गयां देव पितृकार्ये गदाधर। त्वमेव साक्षी भगवन्ननृणोऽहमृणत्रयात्॥ इति प्राङ्मुखः पठेत्। एतावत् क्रियाकलापाशक्तौ प्रेतशिलायां पिण्डदानमपि कर्त्तव्यम्। तद्यथा। ओमद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणां अमुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकदेवीनां अमुकगोत्राणां ... ...
मातामहानाममुकामुकशर्मणां अमुकगोत्राणां
मातामहीवृद्धप्रमातामहीनाममुकामुकदेवी-
नाम् प्रेतशिलायां पिण्डदानमहं करिष्ये।
उपमन्त्रं कृत्वा। ओं सव्यवाहोऽनघः ...
...त्रयादित्यन्तं काण्डं पूर्वविधिं कुर्य

कृत्वा प्रेतपर्वतमारुह्य पित्राह्वानादिसावित्रश्रावणपर्यन्तं प्रेशिलावत्कर्त्तव्यम्। अयं तु विशेषः। ओंअद्य पित्रादीनां पुनरावृत्तिरहितब्रह्मलोकप्राप्तिकामः प्रेतपर्वतश्राद्धमहं करिष्ये। इतिपार्वणसङ्कल्पः। तच्च पार्वणं ब्रह्मवेद्यां क्रियतइतिसमाचारः। सावित्रश्रवणानन्तरम्। ओं अद्य पितृगणप्रेतत्वविमुक्तिस्वगतप्रेतत्वाभावकामः प्रेतपर्वते तिलमिश्रसक्तुनिक्षेपमहं करिष्ये। इति सङ्कल्प्य तिलमिश्रसक्तून्प्रेतपर्वते दक्षिणामुखः क्षिपेदनेन मन्त्रेण। ओं ये केचित्प्रेतरूपेण वर्त्तन्ते पितरो मम। ते सर्वे तृप्तिमायान्तु सक्तुभिस्तिलमिश्रितैः॥ इति। ततः ओं आब्रह्मस्तम्बपर्यन्तं यत्किञ्चित्सचराचरम्। मया दत्तेन तोयेन तृप्तिमायान्तु सर्वशः॥ इति मन्त्रेण तिलतोयाञ्जलिं दद्यात्। ततो यथाशक्तिब्राह्मणाय दक्षिणांमिहवद्यात्। इति गयाश्राद्धद्वितीयदिनकृत्ये प्रेतपर्वतविधिः॥

॥ अथ तृतीयदिने पञ्चतीर्थीकृत्यमुच्यते॥

ततो गयाप्राप्तितृतीयदिने फल्गुतीर्थे स्नानादिदेवार्चनान्तं कर्म कृत्वा पवित्रोपग्रहपाणिराचम्य वारिणा शिरोऽभ्युक्ष्य उत्तरमानसं गत्वा ओमद्यपापक्षय काम उत्तरमानसे स्नानमहं करिष्ये। इति सङ्कल्प्य स्नानीयमन्त्रान्पठित्वा। ओं उत्तरे मानसे स्नानं करोम्यात्मविशुद्धये॥ स्वर्गलोकादिसंसिद्धिसिद्धये पितृमुक्तये। इति पठित्वा मज्जनं कार्यम्। त-

